प्रधानसम्पादकः
**प्रो. विजयकुमारः सी.जी.**
कुलपतिः

प्रबन्धसम्पादकः
**डॉ. तुलसीदासपरौहा**
सहाचार्यः विभागाध्यक्षश्च
संस्कृतसाहित्यविभागः

सम्पादकः
**डॉ. संकल्पमिश्रः**
सहायकाचार्यः विभागाध्यक्षश्च
वेदविभागः

**सह-सम्पादकाः**
डॉ. पूजा उपाध्यायः
डॉ. शुभम् शर्मा
डॉ. अखिलेशकुमारद्विवेदी
डॉ. उपेन्द्रभार्गवः

**प्रकाशकः**
कुलसचिवः
महर्षिपाणिनिसंस्कृतवैदिकविश्वविद्यालयः, उज्जयिनी (म.प्र.)

| **सदस्यताशुल्कम्** | **मुद्रण-दिनांकः** |
| --- | --- |
| वार्षिकम् - 3000/- | मोक्षदा एकादशी |
| मूल्यम् - 725/- डाकव्ययः 50/- | 23.12.2023 |

# नैवेद्यम्

महतो मोदस्य विषयः यत् त्रैमासिक्याः सान्दर्भिकशोधपत्रिकायाः **पाणिनीये**'त्यस्याः ३६ तमोऽङ्कः पाठकानां करकमलेषु विराजते। अधुना भारते नवीनशिक्षानीत्यनुसारं शिक्षणं जायते। अस्मिन् प्रायोगिकशिक्षायाः महत्त्वं वरीवर्ति। व्यवहारेणैव प्राप्तशिक्षायाः प्रकर्षो भवति उक्तमपि महाभाष्ये- **चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति। आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन व्यवहारकालेन च** आचारस्य शिक्षायाः कृते नितरां शोधस्य आवश्यकता समाजे विद्यते। विविधविद्यायाः शोधलेखानां पत्रिका शिक्षाविद्भ्यः नवदृष्टिं प्रददेदिति कल्पये। अस्याम् अनुसन्धानयुक्तपत्रिकायां विद्यार्थिनः कार्यकुशलिनो भविष्यन्ति । सद्विद्यायाः उपासनं सर्वदा करणीयम् एतेन परम्परायाः वीचितरङ्गन्यायेन प्रवर्धनं जायते। शिक्षणकेन्द्राणि एव समाजाय सुनीतिसहितां युक्ताचारां विद्याञ्च प्रदाय सुराष्ट्रं कर्तुं शक्नुवन्ति। अत एव पुराकालादारभ्य अद्यावधिः शिक्षालयाः प्रासङ्गिकाः सन्ति। महर्षिभर्तृहरेः वाक्यपदीयस्य वचनं स्मरणीयम् –

**विधातुस्तस्य लोकानामङ्गोपाङ्गनिबन्धनाः।**
**विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः।। ( १/१० )**

इयं पत्रिका नूनं हि शिक्षायाः उद्देश्यस्य पूर्तिं विधास्यती' त्याशासे।

C.G. Vijayakumar

विदुषां वशंवदः
**आचार्यविजयकुमारः सी.जी.**
कुलपतिः

# सम्पादकीयम्

मोक्षपुर्यवन्तिकास्थमहर्षिपाणिनिसंस्कृत-एवं-वैदिकविश्वविद्यालयस्य **यूजीसीकेयर** (UGC-CARE) इत्यस्यां सूच्यां समाविष्टा त्रैमासिक-सान्दर्भिक-शोधपत्रिका पाणिनीया स्व-षट्त्रिंशत्तमाङ्केन (मई-जुलाई २०२३) सारस्वतसमाराधकानां भवतां करकमलयोः प्रस्तूयते। पत्रिकायाः नैरन्तर्यं, प्रकाशितसामग्र्यः, गभीरविषयप्रतिपादनं शोधलेखाश्चैतस्याः गाम्भीर्यं प्रकटयन्ति।

वस्तुतः प्रत्येकस्मिन्नङ्के स्तरस्य प्रौढत्वं, स्वरूपस्य आकर्षणं महत्त्वस्य च वार्द्धक्यं स्यात् एतादृश्यः उत्कण्ठाः जनेषु भवन्ति। प्रकृतेऽङ्केऽस्मिन् आहत्य सप्तदश (१७) आलेखाः सन्ति, एतेषु अष्ट (०८) संस्कृतभाषायां, षट् (०६) हिन्द्यां, त्रयः (०३) च आलेखाः आङ्गलभाषायां सुगुम्फिताः सन्ति । इत्थं भारतवर्षस्य **मध्यप्रदेश-बंगाल-राजस्थान-बिहार-महाराष्ट्र-आंध्रप्रदेश-उत्तरप्रदेश-हरियाणा-पंजाब-केरल-उत्तराखण्ड-दिल्लीप्रभृतिप्रदेशानां** प्रातिनिध्यमत्र संदृश्यते। चितेषु शोधालेखेषु वेद-व्याकरण-साहित्य-शिक्षा-दर्शन-योगशास्त्राणाम् आश्रयो वर्तते ।

पाणिनीया स्वपाणिनीयत्वं प्रकाशयन्ती सर्वेषु जिज्ञास्यमानेष्वाह्लादकरी ज्ञानविवर्धनकरी, साहाय्यकरी च स्यादनया कामनया सर्वेषाम् अधोलिखितमन्त्रेण मङ्गलमभिलषे -

**ॐ विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न आ सुव ।।**

मोक्षदा एकादशी
विक्रम संवत् २०८०

विद्वच्चरणचञ्चरीकः
**डॉ. सङ्कल्पमिश्रः**

# अनुक्रमणिका

**हिन्दी-प्रभागः**



**आंग्ल-प्रभागः**

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# श्रीमन्निम्बाकाचार्य्यप्रणीते द्वैताद्वैत-वेदान्तसिद्धान्ते मोक्षादनन्तरं जीवात्मनोऽवस्थानम्

**अर्घ्यदीपरायः***

**सारः -** वेदान्तशास्त्रेषु प्रतिपादितानि तत्त्वानि स्वात्मबुद्ध्या विचारयन् बहवः साम्प्रदायिकसिद्धान्ताः उपन्यस्ताः विपश्चिद्भिः। तेषु अद्वैत-द्वैत-द्वैताद्वैत-विशिष्टाद्वैतादीनि मतानि प्रसिद्धानि एव। जीवब्रह्मणोः सम्बन्धमाश्रित्य अपि भेद-अभेद-भेदाभेद इति मतत्रयमुपलभ्यते शास्त्रेषु। तत्र स्वाभाविक-भेदाभेदवाद-प्रवक्ता भगवान् श्रीमन्निम्बार्काचार्यः सर्वेषु वेदान्तसिद्धान्तेष्वन्यतमं द्वैताद्वैतसिद्धान्तं व्याचिख्यासु ब्रह्मसूत्राख्यायाः शारीरकमीमांसायाः 'वेदान्तपारिजातसौरभः' इति भाष्यग्रन्थं विरचितवान्। द्वैताद्वैतदर्शने चिदचिद्ब्रह्मेति तत्त्वत्रयं सविशेषतया प्रतिपादितम् । तत्र ब्रह्म युगपत् सगुणं निर्गुणं च, जगतोऽभिन्ननिमित्तोपादानकारणम् । चिदात्मको जीवस्तदंशसम्भूतः। अनादिमायापरियुक्तरूपस्य जीवात्मनः मोक्षादनन्तरं कीदृशी स्थितिर्जायते इत्यस्मिन् निबन्धे समासतः आलोचितमस्माभिः।

**कूटशब्दाः -** जीवन्मुक्तिः, सूक्ष्मशरीरं, अध्यासः, उत्क्रान्ति-गत्यागतिः, स्वाभाविक-भेदाभेदवादः।

जीवस्यास्तित्त्वं किं तावन्मोक्षपर्यन्तम् उत तदनन्तरमपि वर्तते इति जिज्ञासायां साम्प्रदायिकानां मतभेदो दृश्यते। यतो मोक्षस्वरूपविषये सर्वे ऐक्यमत्यं न आवहन्ति, अतः मोक्षादनन्तरं मुक्तस्य स्वरूपविषयेऽपि मतविरोधस्तु स्वाभाविक एव। मोक्षादनन्तरं जीवात्मा परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते इति श्रुताताम्नायते । अतः 'स्वेन' इति शब्दात् एतन्निश्चीयते यत्, मोक्षादनन्तरं जीवो न स्वरूपतो ब्रह्म भवति, अपि तु जीवो जीव एव वर्त्तते। न हि तस्य काचित् स्वरूपहानिः मोक्षात् उपजायते। द्वैताद्वैत-वेदान्त-

*खलिसानी-महाविद्यालयः, चन्दननगरम्, हुगली, पश्चिमबङ्गम्

सिद्धान्तप्रतिपादयता श्रीमन्निम्बार्काचार्येण वेदान्तकामधेनु-ग्रन्थे जीवस्वरूपं प्रकटीकृतम् । तत्र जीवस्य ज्ञानस्वरूपत्वं ब्रह्माधीनत्वं शरीर-संयोग-वियोगयोग्यत्वं अणुत्वं प्रतिदेहभिन्नत्वम् आनन्त्यञ्च द्वैताद्वैताभिमतं प्रतिपादितम्।[1] इदमेव जीवस्वरूपं यथा बद्धावस्थायां तथा हि मुक्तावस्थायामपि वर्त्तते इति द्वैताद्वैतसिद्धान्तः। तत् कथमिति इदानीमालोच्यते। जीवस्य ज्ञानस्वरूपत्वं बद्धावस्थायाम् अविद्यात्मिकया मायया आवृतं वर्त्तते। मोक्षे तु तदावरणनाशे तस्य ज्ञानस्वरूपत्वं स्वत एव प्रकाशते। किन्तु, बद्धजीवो यथा सर्वथा परमात्माधीनं वर्त्तते, तथा मुक्तात्माऽपि इति। यद्यपि मुक्तस्य सत्यसङ्कल्पत्वादिकं श्रुतावुक्तमस्ति, किन्तु तदपि सङ्कल्पत्वं भगवदिच्छाधीनमिति ज्ञेयम्, 'तस्माच्छरीरादिमत्वं तदभावश्च भगवत्सङ्कल्पाधीनं मुक्तस्ये'[2]ति निर्देशितत्वात् । मुक्तस्य शरीरसंयोग-वियोगयोग्यत्वं तु श्रुतावेव उक्तं, 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तद्या नवद्या चैव'[3] इत्यादिना। बद्धावस्थायां जीवो यथा अणुपरिमाणकं वर्त्तते तथा हि मुक्तावस्थायामपि, न हि जीवो मोक्षे विभुत्वमाप्नोति, भगवद्भावे स्थितस्यापि मुक्तात्मनो ब्रह्मांशत्वमेव वर्त्तते। अतो न अंशभूतमुक्तात्मनोऽशि-परिमाणसाम्यं शङ्क्यम् ।

ननु बन्ध-मोक्षयोर्जीवस्य स्वरूपवैषम्याभावाद्बद्धावस्थातो मोक्षे को विशेष इति चेत्, उच्यते, 'कर्मसंज्ञकाविद्यासंकुचित-ज्ञानादिधर्मकस्य नित्यप्राप्तत्वेऽपि तद्रूपबन्ध-विनिर्मुक्तस्य आविर्भूतापहतपाप्मत्वादिगुणकदम्वस्य जाग्रदाद्यवस्थातीतस्य स्वरूप-स्याप्राप्तत्वात्, इह तु अपरिच्छिन्नज्ञानापहतपाप्मत्वादिगुणाश्रयस्य स्वरूपस्याभिनिष्प-त्तिरिति विशेषस्य सत्त्वात्'[4] इति यावत् । अस्यार्थः, बद्धावस्थायां जीवस्वरूपम् अनादि-कर्मात्मिकयाऽविद्यया आवृतं भवति, येन नित्यप्राप्तमपि सच्चिदानन्दात्मकं स्वरूपं नानुभूयते। किन्तु मुक्तौ मायावरणस्य नाशात् स्वरूपाधिगमे निरविशेषणानन्दावाप्तिरेव विशेषः।

ननु मोक्षप्राप्तस्य 'ऐतदात्म्यमिदं सर्वम्', 'तत्त्वमसि' एवं सर्वभूतान्तरात्मा' इत्यादिश्रुतिभ्यः ब्रह्मात्मकता ब्रह्मापृथक्सिद्धिरेव अवगम्यते, तदपि 'अविभागेन दृष्टत्वात्'[5] इति सौत्रप्रमाणात् दार्ढ्यं प्राप्नोति इति चेत्, उच्यते, मैवम् । न च तथात्वे अत्यन्ताभेद एव सिद्ध इति वाच्यम्, ''ब्रह्मात्मीयस्य तदात्मकत्व-तदपृथक्त्वाद्यनुभवितृरूपस्यापि सत्त्वात् 'एतदात्म्यमिदमि' त्यत्र घटकश्रुत्या उभयत्वस्य सूपपन्नत्वात्'[6] इति। अपि च जीव-ब्रह्माणोः अंशांशिभावो पूर्वमेव निरूपितः। अतः यदा श्रवणादिना आत्मज्ञानपरिपाकात् परमात्मा दृष्टो भवति, तदैव स्वात्मपरमात्मस्वरूप-याथात्म्यज्ञानप्रतिबन्धकाः सर्वे विनश्यन्ति, ''भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे''[7] इति श्रुतेः। अतः मुक्तजीवः सर्वात्मानं स्वांशिनं दृष्ट्वा अंशभूतं स्वात्मनं न पुनः विभागेन अनुभवति। उक्तञ्च वेदान्तकौस्तुभकारेण,

''प्रत्यगात्मनो हि विभागाभावात् स्वरूपतः स्वाभाविके विभागेऽपि तत्सहिष्णुर्गुण्यादिभ्य गुणादेरिव ब्रह्मतो जीवस्य स्वाभाविकोऽविभागो ज्ञेयः''[8] इति। अत एतद्वक्तव्यं यत् मुक्तः विभागसहिष्णुना अविभागेन स्वात्मानमनुभवति इति नात्र स्वाभाविकभेदाभेदबाधातिप्रसङ्ग इति।

मुक्तपुरुषस्य देहेन्द्रियादिर्भवति नवेति संशये 'न' इति बादरिमुनेराशयो भगवता ब्रह्मसूत्रकारेण उपन्यस्तः। तत् कथम् । यदि शरीरादि एव विद्यते तर्हि दुःखादेरपि प्रसङ्ग आपतेत्, 'न वै सशरीरस्य सतः  प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत'[9] इत्यादिश्रुतेः। किन्तु, आचार्यजैमिनिः तद्विपरीतमेव मन्यते। तत्रापि श्रुतिः, 'स एकधा भवति त्रिधा भवति पञ्चधा भवति'[10] इति। अथ भगवान् ब्रह्मसूत्रकारोऽत्र एवं मीमांसते, 'द्वादशाहवदुभयविधम्'[11] इति। अत्र आह भगवान् भाष्यकारः श्रीमन्निम्बार्काचार्यः, 'सङ्कल्पादेव शरीरत्वमशरीरत्वञ्च मुक्तस्य भगवान् बादरायणो मन्यते। द्वादशाहस्य यथा 'द्वादशाहमृद्धिकामा उपेयुः', 'द्वादशाहेन प्रजाकामं याजयेदि'ति सत्रत्वमहीनत्वं च भवति तद्वत्'[12] इति।

एतेन स्पष्टतया प्रतीयते यत् मोक्षेऽपि परब्रह्मणा जीवस्य अत्यन्ताभेदो न भवति। किन्तु मुक्तावस्थायां जीवः शुद्धचिद्रूपे प्रतिष्ठितः सन् 'सह ब्रह्मणा' तस्य स्वरूपगतम् आनन्दमनुभवति। तदपि स्वतः एव प्रतिपद्यते, न स्वतन्त्रचेष्टामपेक्षते। यथा स्वप्नद्रष्टा यत्नेन विनैव स्वत एव स्वेच्छानुसारं भुङ्क्ते तथा हि मुक्तस्यापि भोगो ज्ञेयः। तदेव भगवता ब्रह्मसूत्रकारेण 'तन्वभावे सन्ध्यवदुपपत्तेः'[13] इत्यादिना उपन्यस्तम्। अतो जीवस्य सत्यसङ्कल्पत्वादि जगद्व्यापारवर्ज्जम् इति विशेषः।[14] उक्तञ्च भगवता भाष्यकारेण श्रीमन्निम्बार्काचार्येण, 'जगत्सृष्ट्यादिव्यापारेतरं मुक्तैश्वर्यम्। कुतः ? 'यतो वै इमानि भूतानि जायन्ते' इत्यादौ परब्रह्मप्रकरणान्मुक्तस्य तत्रासन्निहितत्वाच्च'[15] इति। ननु 'स स्वराड् भवति' इत्यादिश्रुत्या, मुक्तपुरुषः सर्वेषु लोकेषु कामाचारो भवति, इति यदुक्तं तेन तस्य जगत्सृष्ट्यादिसामर्थ्यमपि उक्तं भवतीति चेत् , उच्यते, तन्न। यतः, अस्या श्रुतेः हिरण्यगर्भादि-अधिकारिमण्डलविषयकत्वमेव दृश्यते, अतः अनेन श्रुत्या मुक्तस्य हिरण्यगर्भादि-सर्व्वाधिकारिमण्डलानां भोग एव विषयीक्रियते, न तु जगत्सृष्ट्यादिव्यापारमिति। ननु मुक्तस्यापि यदि हिरण्यगर्भादि-सर्व्वाधिकारिमण्डलगत-भोगमुपपद्येत तर्हि पुनः बद्ध-मुक्तयोः समाना एव स्थितिरिति चेत् , उच्यते, मुक्तस्तु जन्मादिषड्भावविकारशून्य-अखिलदोषलेशास्पृष्ट-निरतिशयकल्याणगुणयुक्तं भोगं भुङ्क्ते, अतः सांसारिकभोगं भुञ्जानो बद्धपुरुषात् तस्य विशेषस्तु अस्ति एव। अत उक्तं श्रुतिषु, 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्'[16], 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति'[17]

इति।

अत्र अद्वैतवादिन एवं मन्यन्ते यत्, मुक्तस्य प्राप्तस्वरूपविषये यदैश्वर्यादिभोगमुक्तं श्रुति-स्मृति-ब्रह्मसूत्रादिषु, तत्तु सगुणब्रह्मोपासनाबलेन येषां क्रममुक्तिर्भवति, तेषामेव भवति, न तु निर्गुणब्रह्मोपासीनस्य सद्यमुक्तस्य (जीवन्मुक्तस्य वा) इति। 'स्वेन रूपेण' इत्यत्र आत्ममात्ररूपेण अभिनिष्पद्यते उत आगन्तुकेन रूपेण इति संशये यद्यपि भगवता ब्रह्मसूत्रकारेण ''पूर्वभावादविरोधमि''त्युक्तम्, किन्तु आचार्यशङ्करस्तु औडुलोम्याचार्यस्य मतमनुसृत्य अत्र स्वसिद्धान्तमेवमाह, ''चैतन्यमेव तु अस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता''[18] इति। अपि च, भगवतः ब्रह्मसूत्रकारस्य मीमांसाविषये तेन एवमुक्तम्, ''एवमपि पारमार्थिकचैतन्यमात्र-स्वरूपाभ्युपगमे अपि व्यवहारपेक्षया पूर्वस्यापि उपन्यासादिभ्योऽवगतस्य ब्राह्मस्य ऐश्वर्यरूपस्य अप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते''[19] इति। अतो निर्गुणब्रह्मोपासकस्य विदुषो ब्रह्मभावप्राप्त्यनन्तरं न पुनः किमपि स्वकीयमवशिष्यते इति निष्कर्षः। तर्हि श्रुत्यादिषु मुक्तस्य यदैश्वर्यादिभोगव्यापारमुक्तं तस्य का गतिः? उच्यते श्रीमच्छङ्कराचार्येण, तद् ब्राह्मी-ऐश्वर्य तु सगुणब्रह्मोपासकानामेवेति। ये खलु अस्माच्छरीरादुत्क्रान्ताः सन्तः हिरण्यगर्भादिलोकान् सञ्चरन्तः क्रममुक्तिं भजन्ते, ते एव अत्र ब्राह्मी-ऐश्वर्यविषयीभूता इति। यतो निर्गुणब्रह्मविदो जीवन्मुक्तस्य उत्क्रान्ति-गत्यागतिः अद्वैतनये आदावेव निराकृता, अत इदानीमुत्क्रान्तस्य भोगादिविषये तेषां संश्लेषाभावोऽपि उपन्यस्तः। किन्तु भगवता ब्रह्मसूत्रकारेण 'सगुणब्रह्मोपासक-निर्गुणब्रह्मोपासक' इति भेदेन ब्रह्मोपासकानां विभेदो नोक्तः। न च 'पारमार्थिक-व्यवहारिक' इति भेदेन मुक्तस्य स्वरूपेऽपि भेदः प्रदर्शितः। अत श्रीमच्छङ्काराचार्येण यथा मुक्तस्य स्वरूपविषये भोगविषये च भेद उपन्यस्तः, नैतत् समीचीनं मन्ये। तत्तु तस्य स्वकीयमतमतो विचारार्हम् , किन्तु न ब्रह्मसूत्रकारसम्मतम् इत्यतः सर्वथा न ग्रहणीयमपीति सिद्धान्तः। यदि सगुण-निर्गुणभेदेन ब्रह्मोपासकानां भेदो भगवतो ब्रह्मसूत्रकारस्यापि इष्ट एव स्यात्, तर्हि स्पष्टतया तेन तद् उच्येत एव; यथा ''अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च''[20] इत्यादिना प्रतीकालम्बन-व्यतिरिक्तान् परब्रह्मोपासकान् परब्रह्म नयतीति स्पष्टतया सूत्राक्षरपेदन उक्त्वा प्रतीकालम्बनोपासकानां ब्रह्मप्राप्त्यभावस्तेन सूचितः। अपि च, कार्यब्रह्मोपासकाऽपि हिरण्यगर्भमेव प्राप्नुवन्ति इत्यपि तेन स्पष्टतया एव उक्तम् । किन्तु निर्गुणब्रह्मोपासकवर्ज्जं कस्यापि मोक्षो न भवति इति तु तेन कुत्रापि न उक्तः। अपि तु मुक्तस्य ब्राह्मी-ऐश्वर्यप्राप्तत्वेऽपि जगत्सृष्ट्यादिसामर्थ्याभावात् ब्रह्माणा सह जीवस्य मुक्तावपि भेदाभेद एव तेन प्रकटीक्रियते।

ननु मोक्षप्राप्तस्य यदैश्वर्यादिकमुक्तं तत् किं नित्यमनित्यं वेति संशये नित्यमिति सिद्धान्तः। आब्रह्मभुवनाल्लोका अनित्या एव, किन्तु मुक्तानां स्थितिः

भगवतोऽप्राकृतधामे। तद्धामं विष्णोः परमं पदमुच्यते।[21] भूरादिसप्तलोकानामद्यश्चचुर्षु लोकेषु सञ्चरन्तः जीवा जन्ममृत्युरूप-भवबन्धे आबद्धा भवन्ति। ये खलु साधनद्वारा तल्लोकानतिक्रम्य ऊर्ध्वं गच्छन्ति, तेषां न पुरावृत्तिः संसारेषु। जनः-तपः-सत्य इति लोकत्रयं ब्रह्मलोकमुच्यते। ब्रह्मलोकगतस्य न अधोगतिः पुनर्भवति क्वचित् । किन्तु, एते ब्रह्मलोका अपि न नित्याः।[22] प्रकृतेर्विकारभूता त्रिगुणात्मिका इयं सृष्टिः। अतः सृष्ट्यादौ यथा हिरण्यगर्भात् आब्रह्मभुवनाल्लोका आविर्भूयन्ते, तथा हि प्रलयान्तकाले तेषां लोकानां हिरण्यगर्भे एव विलयो भवति। अतः अर्चिरादिमार्गेषु सञ्चरन्तो ये खलु ब्रह्मलोकान् गच्छन्ति, ते प्रलयान्तकाले अव्यक्तावस्थां प्राप्नुवन्ति। पुनः सृष्ट्यादौ तस्मिन्नेव लोके ते आविर्भूयन्ते; ततो यावन्न भगवद्भावरूपं मोक्षमाप्नुवन्ति, तेष्वेव लोकेषु तेषां स्थितिर्भवति। किन्तु भगवद्धामो न प्रकृतेर्विकारजातः, ''आदित्यवर्णं तमसः परस्तात्''[23] इत्यादिश्रुतेः। अतः, ये खलु भगवद्भावरूपं मोक्षं प्राप्नुवन्ति, ते तद्भगवद्धामम् अक्षयलोकमेत्य नित्यसुखमनुभवन्ति। न हि अप्राकृतस्तद्धामः प्रलये नश्यति, न च सृष्ट्यादौ आविर्भूयते। अतो मुक्तस्य तत्र नित्यस्थितिः।[24] तदेव समर्थयन् भगवता ब्रह्मसूत्रकारेण उक्तं ''अनावृत्तिः शब्दादनावृत्तिः शब्दात्''[25] इति। ननु, अन्तिमसूत्रे सगुणब्रह्मोपासकानामेव केवलम् अनावृत्तिरुच्यते इति चेत् , निर्गुणब्रह्मोपासकानां सूक्षाक्षरेण कथं न व्यपदेशः कृतः भगवता ब्रह्मसूत्रकारेण? उच्यते श्रीमच्छङ्कराचार्येण ''सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धा एव अनावृत्तिः''[26] इति। अतस्तेषां न पुनरनावृत्तिनिर्देशावकाशः। स्यादेतत्, किन्तु, निर्गुणब्रह्मोपासकानामनावृत्तिः कस्मादवगम्यते इति चेत्, 'श्रुतिस्मृत्यादिभ्यः' इत्येव अद्वैतवादिभिः। पुनः सगुणब्रह्मोपासकानाम् अनावृत्तिरपि श्रुतिस्मृत्यादिभ्य एवावगम्यते, यत उक्तम् अन्तिमसूत्रे 'शब्दात्'[27] इति। यदि उभयोरेव सगुण-निर्गुणब्रह्मोपासकयोरनावृत्तिः शब्दादेव सिद्धा, तर्हि कथं सगुणब्रह्मोपासकानां कृते पुनः सूत्राक्षरपदेनैव व्यपदेशः कृत आचार्यैः इति अद्वैतवादिभिः सुतरां वक्तव्यम् ! अतः ग्रन्थस्य उपसंहारे अन्तिमसूत्रे भगवता बादरायणेन सगुणनिर्गुणाविशेषेण सर्वेषामेव ब्रह्मोपासकानामनावृत्ति एव निर्देशिता इति सिद्धान्तः।।

## तथ्यसूत्राणि

1. ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम् ।
   अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः।। (वेदान्तकामधेनु, 1)
2. अध्यास (परपक्षः) गिरिवज्रम्, कलिकता-संस्करणम् , पृ. 916
3. छान्दोग्योपनिषत् 7/26/2
4. अध्यास (परपक्षः) गिरिवज्रम्, कलिकाता-संस्करणम् , पृ. 912,13
5. ब्रह्मसूत्रम् 4/4/4

6. अध्यास (परपक्षः) गिरिव्रजम् , कलिकाता-संस्करणम् , पृ. 914
7. मुण्डकोपनिषत् , 2/2/8
8. ब्रह्मसूत्रम्, वेदान्तकौस्तुभः , 4/4/4
9. छान्दोग्योपनिषत् 8/12/1
10. छान्दोग्योपनिषत् 7/26/2
11. ब्रह्मसूत्रम् 4/4/12
12. तदेव, वेदान्तपारिजातसौरभ-भाष्यम्
13. ब्रह्मसूत्रम्, 4/4/13
14. ब्रह्मसूत्रम्, 4/4/17
15. ब्रह्मसूत्रम्, वेदान्तपारिजातसौरभ-भाष्यम्, 4/4/17
16. छान्दोग्योपनिषत्, 6/1/3
17. तैत्तिरीयोपनिषत्, 2/7
18. ब्रह्मसूत्रम्, शाङ्करभाष्यम्, 4/4/6
19. ब्रह्मसूत्रम्, शाङ्करभाष्यम्, 4/4/7
20. ब्रह्मसूत्रम् 4/3/14
21. न तद्भासते सूर्यो न शशाङ्को न पावकः।
    यद् गत्वा न निवर्त्तन्ते तद्धामं परमं मम।। - श्रीमद्भगवद्गीता 15/6
22. आब्रह्मभुवनाल्लोका पुनरावर्तिनोऽर्जुनः।- श्रीमद्भगवद्गीता 8/16
23. श्वेताश्वतरोपनिषत्, 3/8
24. अर्कमण्डलं भित्वा चन्द्रमसं नीतस्तेन पूर्व्वरीत्या....तत्र विरजातीरे सूक्ष्मं शरीरं प्रकृतिकार्यत्वात् तत्कारणे हित्वाऽमानवदर्शन-करस्पर्शाभ्यां तैः सह सङ्कल्पमात्रेण विरजां तरति। परमधामसीमानं प्राप्य तत्र दिव्याप्राकृतानादिसिद्धामानवानीतब्रह्मालङ्कारैरलङ्कृतो ब्रह्मलोकं परमं पदं ब्रह्माधिगच्छतीति यावत् ।- श्रीकृष्णस्तवराजः, श्रुत्यन्तसुरद्रुमः, 12
25. ब्रह्मसूत्रम्, 4/4/22
26. ब्रह्मसूत्रम्, शाङ्करभाष्यम् , 4/4/22
27. ब्रह्मसूत्रम्, 4/4/22

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# वैदिकवाङ्मये पर्यावरणसंरक्षणम्

**डॉ. पूर्णिमा जाना***

**सारः -** वैदिकयुगे पर्यावरणसंरक्षणचिन्ता ऋषीणां मनसि जाता, यदा तु प्रकृतिः प्राणीनां मातावत् आसीत - 'तदा प्रकृतिदूषणं तथा नासीत् यथा अधुना भवति, तथापि तदानीन्तनकाले प्रकृतिसंरक्षणचिन्ता जाता । तस्मात् अधुना क्षिति-अप्-तेजः-मरुत्-व्योमादीनां सर्वत्रैव दूषणं मात्रातिरिक्तं वर्तते, यद् दूषणेन पृथिव्यां प्राणस्पन्दनं दीर्घस्थायि न भवेदिति वैदिकयुगवत् अधुना प्रकृतिसंरक्षणचिन्ता अस्माभिः कर्त्तव्या।
**कूटशब्दाः -** मानवकल्याणम्, शुद्धाशुद्धवायुः, भद्रा आपः, मधुरं वचनम्, खाद्यम्, भूमिः, माता ।

वैदिकवाङ्मयमित्युक्ते संहिताब्राह्मणारण्यकोपनिषदादी-नामावबोधः जायते। तत्र वैदिकवाङ्मये वैदिकसाहित्ये वा मानवकल्याणमूलकं दर्शनं दरीदृश्यते। तेषां ऋषीणां शिष्याणां तथा जनानामचरणेऽपि मानवकल्याणं केवलं दरीदृश्यते । अतः द्रष्टव्यमासीत् मानवकल्याणं केभ्यः कारणेभ्यः तावत् सम्भवेत् ।

**पर्यावरणसंरक्षणकारणम्**

मानवानां जीवने यानि प्रयोजनानि सन्ति तानि सम्यक् भवन्ति चेत् मानवजीवनं कल्याणमयं स्यात्। तद्यथा खाद्यपरिधेयवासाश्चाद्यः प्रयोजनम्। अनन्तरं खाद्यार्थं परिधेयार्थं वासार्थं च प्रकृत्या सह ज्ञानमपि प्रयोजनं प्रकृत्युपरि खाद्यपरिधेयवासानां निर्भरशीलत्वात्। किन्तु ते सम्यक् भवन्ति न वेति विचारस्तु ज्ञानादागच्छति एव। तद्यथा खाद्याखाद्यविचारे परिधेयापरिधेयविचारे वासनिर्माणे इत्यादौ सर्वत्रैव सिद्धान्तं विचारपूर्वक-मागच्छति। अनन्तरं सर्वेषां कल्याणभावना। अतः आदौ तावत् आत्मकल्याणं तत्परं मानवकल्याणम्।

*अध्यापिका, संस्कृतविभागः, ताम्रलिप्तमहाविद्यालयः, पश्चिमबङ्गम्

पुनः आत्मकल्याणं तदा सम्भवेत् यदा मानवकल्याणं भवेदिति परस्परनिर्भरशीलम्। एतत् सर्वं तु मानवकल्याणम्। मानवकल्याणं पुनः पर्यावरणसंरक्षणेन सम्भवति आद्यप्रयोजनानां सर्वेषामेव प्रकृतिगतत्वात्। तस्मादस्माभिः पर्यावरणसंरक्षणमादौ कर्त्तव्यम्।

न केवलं खाद्यवस्त्रवासा अपि तु रोगोपचारोऽपि प्रकृत्या सम्भवेत् । तस्मात् प्रकृतिरक्षा प्रकृतिसान्निध्यं तां प्रति संवेदनशीलता च कीदृशी भवेदिति ते चिन्ततवन्तः। तद्यथा अथर्ववेदे दृश्यते -

**यस्य भूमिः प्रमान्तरिक्षमुतोदरम् ।**
**दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः।।**

अस्यार्थस्तु यस्य भूमिः पादस्थानीया अन्तरिक्षमुदरं द्युश्च मस्तकं तस्मै परब्रह्मणे नमः।

अत्र परब्रह्मणे नमस्कारानन्तरं प्रकृतिवच्चलननिर्देशः दत्तः। वेदमते प्रकृतिपुरुषयोः पारस्परिकसम्बन्धो वर्तते। ऋग्वेदे प्रकृत्याः मनोहरवर्णना दृश्यते। तत्र कस्मिन् काले कः भक्ष्याभक्ष्यः तथा कथं स्थातव्यमपि तु प्राकृतिकजीवनमेव शान्तिपूर्णमिति मन्यते।

ऋग्वेदे (7/103/7) वर्षर्तुरागमनमुत्सववदिति मत्वा प्रकृत्या सह हार्दिकाभिव्यक्तिः दृश्यते -

**ब्राह्मणासो अतिरात्रे न सोमे सरो न पूर्णमभितो वदन्तः।**
**संवत्सरस्य तदहः परि ष्ठ यन्मण्डुकाः प्रावृषीणं बभूव।।**

इत्यर्थः - वर्षागमनस्य प्रथमदिवसे मण्डुकाः यथा दरीदृश्यते वावद्यते च तथा हे ब्राह्मणः त्वमपि ऊषाकाले ब्राह्ममुहूर्ते वेदध्वनिपूर्वकं परमेश्वराय यज्ञं वर्णयन् वर्षर्तुरागमनमुत्सववत् कुरु ।

ऋग्वेदे प्रकृतिविभागः बहुधा कृतः। वायु-अप्-शब्द-खाद्य-क्षिति-वनस्पति-पश्वादयः। प्राणीनां जीवनरक्षार्थं वायुः आद्यः प्रयोजनः। प्राणवायुं विना प्राणी क्षणकालमपि जीवितुं न शक्नोति । अतः वायोः विशुद्धतया रक्षा कर्त्तव्या। यजुर्वेदे (27/12) दृश्यते -

**तनूनपादसुरो विश्वदेवा देवो देवेषु देवः।**
**पथो अनक्तु मध्वा घृतेन।।**

अर्थात् श्रेष्ठपदार्थानां श्रेष्ठः किन्तु प्रकाशरहितः अपि च सर्वेषां प्राप्तव्यः वायुः शरीरे न पतित्वा जलेन सह श्रोत्रादिमार्गदर्शकः भवति। स वायुः त्वया ज्ञातव्यः।

वायुः शुद्धाशुद्धरूपः। अनयोः प्राणवायुः शुद्धः। जीवानां हानिकारक अशुद्धः वायुः। तत्र ऋग्वेदे (10/137/2) दृश्यते-

**द्वामिवौ वातौ वात आ सिन्धोरा परावतः।**
**दक्षं ते अन्य आ वातु परान्यो वातु तद्रपः॥**

अर्थात् प्रत्यक्षभूतं वायुद्वयं आसमुद्रं समुद्रात् दूरपर्यन्तं वहति। हे साधक अनयोरेकः त्वत्कृतः वलदायकः। द्वितीयश्च दूषितः दूरं निक्षेपार्थकः। ऋग्वैदिकयुगे वायुद्वयविषये ऋषीणां ज्ञानमासीत् । ऋग्वेदे (10/186/3) दृश्यते -

**यददौ वात ते गृहेऽमृतस्य निधिर्हितः।**
**ततो न देही जीवसे॥**

अर्थात् अस्मिन् वायुगृहे अमरत्वरूपेण स्थितः यः वायुः सः जीवनार्थमावश्यकः । शुद्धः वायुः केषाञ्चिद्व्याधिनामौषधिरूपेणापि कार्यं करोति। ऋग्वेदे (10/167/4) दृश्यते -

**आ त्वागमं शन्तातिभिरथो अरिष्टतातिभिः।**
**दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते॥**

अर्थात् हे रोगी मनुष्य अहं वैद्यः भवन्तं निकषा कल्याणकारकं शुद्धं वायुमानयामि। रोगं च दूरीकरोमि। हृदयरोगतपेदिकादिरोगेषु वायुग्रहणमावश्यकम्। ऋग्वेदे (10/186/1) दृश्यते -

**वा आ वातु भेषजं शम्भु मयोभु नो हृदे।**
**प्र ण आयुंषि तारिषत् ॥**

अर्थात् स्मर्तव्यं यत् शुद्धः वायुः अमूल्यः ओषधी। यः अस्माकं हृदयार्थमोषधीवदुपयोगी आनन्ददायकश्च । स वायुः आयुर्ददाति।

जलदूषणरोधविषयोऽपि वेदे दृश्यते। मानवजीवने जलस्य प्रयोजनं बहुधा दृश्यते। तद्यथा पेयरूपे परिष्करणे शैत्यीकरणे नौचालने एवमित्यादिषु दृश्यते। जलं विना जीवनं न सम्भवेत्। अतः गृहं निकषा जलाशयावस्थानमावश्यकीयम्। अथर्ववेदे (3/12/9) दृश्यते -

**इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः।**
**गृहानुप प्र सीदाम्यमृतेन सहाग्निना॥**

अर्थात् रोगहीनं रोगनाशकं जलं नयामि। शुद्धजलपानेन मृत्युहीनः भवामि। अन्न-घृत-दुग्धाग्निभिः सह गृहे उपविशामि।

शुद्धजलं दीर्घायुः ददाति। तथा प्राणरक्षकः कल्याणकारी च भवति। ऋग्वेदे (10/9/4) दृश्यते -

**शं नो देवीरभिष्ठय आपो भवन्ते पीतये।**
**शं योरभि स्त्रवन्तु नः॥**

अर्थात् सुखमयं जलमस्मभ्यम् अभीष्टदानं करोतु तथा कल्याणकारी भवतु। जलं मदुपरि सुखादिवर्षणं करोतु। जलं शरीरकान्तिमपि वर्धयति। भोज्यस्यात्तिकरणार्थं जलमावश्यकम् । अथर्ववेदे (3/13/5) दृश्यते -

**आपो भद्रा घृतमिदाप आसन्नग्निषोमौ बिभ्रत्याप इत्ताः।**
**तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वचसा गमेत् ।।**

अर्थात् स्मर्तव्यं यत् जलं मङ्गलमयं घृतवत् पुष्टिदाता च। भोज्यपचानार्थमुपयोगि च। प्राणा-कान्ति-वल-पौरुषदाता अमरतां निकषा गमने जलमेव मूलतत्त्वम् ।

इत्थं दृश्यते क्षुधा-दुःख-चिन्ता-मृत्युत्यागपूर्वकमानन्ददानं जलेनैव भवति। अथर्ववेदे 3/13/6 मन्त्रे दृश्यते -

**आदित्पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्मासाम् ।**
**मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं तदा वः।।**

अर्थात् दर्शनश्रवणवचनशक्तयः जलं विना नागच्छन्ति। जलं जीवनाधारम् । कति जीवास्तु जलं जायन्ते जीवन्ति च। हे जलधारकः मां निकषा आगच्छ। त्वममृतम् ।

कृषिकार्येऽपि जलस्योपयोगिता ऋग्वेदे (10/9/3) दृश्यते एवम्प्रकारेण -

**तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ।**
**आपो जनयथा च नः।।**

अर्थात् हे जल त्वमन्नप्राप्त्यर्थमुपयोगि। त्वदुपरि जीवनं तथा ओषधयः वनस्पतयः अन्नादयः पदार्थाः निर्भरशीलाः। त्वमोषधीरूपमेव ।

शब्ददूषणरोधविषयेऽपि वैदिकाः मन्त्राः दृश्यते। वर्तमानकाले शब्ददूषणं सर्वत्रैव दृश्यते। तद्रोधस्तु कुत्रापि न दृश्यते । अथर्ववेदे (3/30/3) दृश्यते -

**मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा।**
**सम्यञ्च सव्रता भूत्वा वाचं वदत भद्रया।।**

अर्थात् भ्राता भ्रात्रा भगिनी भगिन्या परस्परं न द्विषेत् । सर्वे एकमन् भूत्वा मधुरं वचनं वदेयु । अथर्ववेदे (1/34/2) दृश्यते -

**जिह्वया अग्रे मधु मे जिह्वामूले मधुलकम् ।**
**ममेदह क्रतावसो मम चित्तमुपायसि।।**

अर्थात् अहं जिह्वया मधुरं वचनं वदामि। भगवते भजनपूजनादिनिवेदनकाले माधुर्यं तिष्ठतु।

खाद्यदूषणरोधोऽपि तत्र वेदे वर्तते। यतः खाद्य एव शरीरे बलदायकः। तस्मात् चर्व्यचोष्यलेह्यपेयादिसुखाद्यमेव ग्राह्यम् । अथर्ववेदे (6/135/2) दृश्यते -

**यत् पिबामि सं पिवामि समुद्र इव संपिव।**
**प्राणामनुष्य संपाय संपिवामो अमुं वयम् ।।**

अर्थात् अहं यत् पिबामि यथाविधि पिबामि। दुग्धजलादिपेयः यथाविधि पिबामि। खाद्यमपि यथाविधि खादामि। यथाविधि खादित्वा इव समुद्र सर्वं गृह्णादि। अहमपि फलादीनि रसवर्धकानि खाद्यानि खादामि।

क्षितिदूषणरोधविषयेऽपि मन्त्राः दृश्यते। अथर्ववेदे क्षितेः महत्त्वं दर्शितम् । तत्र प्राणिवर्गः पृथिवीपुत्रः। माता भूमिः पुत्र अहं पृथिव्याः। पृथिवीनिर्माणं कथमभवत्तद्दर्शितम्-

**शिला भूमिरस्मा पांसुः सा भूमिः संधृता धृता।**
**तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः।।**

अहं हिरण्यगर्भपृथिव्यर्थं स्वागतवचनं करोमि। विभिन्नानि खाद्योषधिफलानि तत्र जायन्ते। पृथिवी एव खाद्यस्योत्स्यस्थानम् । तस्मात् पृथिवीं मातृवत् दर्शनीयम् । अथर्ववेदे (12/1/42) दृश्यते -

**यस्मामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः।**
**भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे।।**

अत्र स्मर्तव्यं यत् खाद्यं तथा स्वास्थ्यकरवनस्पतयः पृथिव्यामेव जायन्ते। पृथिवी वनस्पतीनां माता मेघश्च पिता। यतः वर्षणमाध्यमेन जलं दत्वा पृथिव्या गर्भाधानं करोति मेघः। पृथिव्यां विभिन्नानि खाद्यानि प्राप्यन्ते। अथर्ववेदे (12/1/60) अस्ति -

**यमन्वैच्छद्धविषा विश्वकर्मान्तरर्णवे रजसि प्रविष्टाम् ।**
**भुजिष्यं पात्रं निहितं गुहा यदाविर्भोगे अभवन्मातृवद्भ्यः।।**

अस्यार्थस्तु ज्ञानी मनुष्यः पृथिव्याः कन्दमूलानि खाद्यानि संगृह्य जीवति।

**उपसंहारः**

प्रकृत्युपरि न केवलं मानवजीवनमपि तु सर्वेषां मनुष्येतरजीवानामपि निर्भरशीलता वर्तते। तस्मात् प्रकृतिरक्षा आदौ कर्तव्या। प्रकृतिरक्षणेन पृथिव्यां जीवनमपि दीर्घस्थायी भविष्यति इति तु वैदिकयुगे यदा प्रकृतिदूषणं किञ्चिन्मात्रमासीत्तदा ऋषिभिः दृष्टम् । अधुना तु प्रकृतिदूषणं मात्रातिरिक्तं तथापि समाजे सर्वेषां प्रकृतिरक्षणविषये प्रचेष्टा न दृश्यते-इति भावनीयम् । अतः पुनः पुनः आलोचनसापेक्षम् । आलोचनमाध्यमेन प्रकृतिरक्षा न भवेदिति आलोचनपूर्वकं कथं प्रकृतिरक्षा अस्माभिः कर्त्तव्या सा प्रचेष्टापि कर्त्तव्या।

**सन्दर्भाः**

1. वेदकथाङ्क-राधेश्यामखेमका, गीताप्रेस-गोरक्षपुरम्
2. ऋग्वेदसंहिता, चौखम्बासंस्कृतप्रतिष्ठानम् , 38 उ अ वङ्गलो रोड, जवाहरनगरः, दिल्ली 2008
3. अथर्ववेदसंहिता, चौखम्बासंस्कृतप्रतिष्ठानम् , 38 उ अ वङ्गलो रोड, जवाहरनगरः, दिल्ली, 2009

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# साध्यावस्थायां धातुभिः सह प्रत्ययनिर्धारणम्

विशालगौतमः*, डॉ. योगेशशर्मा**

**सारः -** पाणिनिव्याकरणशास्त्रे धातूनाम् अवस्थाद्वयं प्राप्यते। प्रथमा सिद्धावस्था द्वितीया साध्यावस्था च स्तः। अत्र सिद्धावस्था तु सामान्यरूपेण तिङन्तप्रत्ययान्तरूपेण सामान्यतः अवगम्यते परन्तु साध्यावस्थायां संशयो भवति यत् के तिङ्भिन्नाः प्रत्ययाः सन्ति। किं सर्वेषां तिङ्भिन्न-प्रत्ययानां समावेशो भवति अथवा केषाञ्चन प्रत्ययानामेव ? कथं तेषां साध्यावस्थात्मकोऽर्थो भवति। कथं तेषां व्याकरणे प्रयोगोः भवन्ति। इति विषयं स्वीकृत्य साध्यावस्थायाः प्रत्ययानां सम्यग् विवेचनं संक्षिप्तरूपेण अस्मिन् शोधपत्रे प्रस्तूयते।

**कूटशब्दाः -** सिद्धावस्था, साध्यावस्था, धातुपाठः, फलव्यापाराः, निबन्धनः, प्रत्ययाः ।

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च प्रधानं च षडङ्गेषु व्याकरणम्[1], चत्वारि शृङ्गा त्रयोऽस्यपादाः[2] साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः[3], इत्यादिषु सूक्तिषु व्याकरणस्य वैशिष्ट्यं सर्वोपरि वर्तते। व्याकरणज्ञानेन विना शब्दराश्याः सम्यग् ज्ञानं न सम्भवति। व्याकरणम् इत्युक्ते व्याक्रियन्ते व्युत्पाद्यान्ते असाधुशब्देभ्यो विविच्य पृथक् क्रियन्ते साधुशब्दाः अनेन इति व्याकरणम् । सामान्यरूपेण पश्यामश्चेत् व्याकरणस्य त्रयाः मुख्यस्तम्भाः सन्ति-वर्णपरिचयः, शब्दपरिचयो वाक्यपरिचयश्च। वर्णपरिचयस्य सम्पूर्णवर्णनं सिद्धान्तकौमुद्यां प्रायः संज्ञाप्रकरणे प्राप्यते। वाक्यपरिचस्य

*शोद्यार्थी, संस्कृत-दर्शन-वैदिक-अध्ययन-विभागः, वनस्थली-विद्यापीठम्
**सह-आचार्यः, इन्दिरागांधी-राष्ट्रीयकलाकेन्द्रम्, नवदेहली
पूर्वसहायक-आचार्यः संस्कृत-दर्शन-वैदिक-अध्ययन-विभागः, वनस्थली-विद्यापीठम्

वर्णनं प्रायः कारकप्रकरणे प्राप्यते। शब्दपरिचयस्य वर्णनमेव सम्पूर्णव्याकरणस्य नवतिः प्रतिशतभागो वर्तते। शब्दपरिचयः इत्युक्ते नामाख्यातरुपसर्गो निपातश्च।[4] तत्र वर्णमेलनार्थं सन्धिप्रकरणम्, शब्दमेलनार्थं समासप्रकरणम्, शब्दनिर्माणार्थं षड्लिङ्गप्रकरणम्, आख्यातशब्दानाङ्कृते तिङ्न्तप्रकरणं कृदन्तप्रकरणञ्च अन्यसर्वविधशब्दानाङ्कृते तद्धितप्रकरणं चेत्येषां वर्णनं व्याकरणे वर्तते। एतेषां सर्वेषां प्रकरणानां सम्यग्ज्ञानोपरान्तानन्तरमेव कोऽपि वैयाकरणः भवितुं शक्यते। एतदतिरिच्य धातुपाठो गणपाठः शब्दकोषो निरुक्तश्च इत्यादीनामपि सम्यग्यज्ञानमावश्यकं भवति। एतेषु वैयाकरणिकविषयेषु आख्यातार्थं प्रति चिन्तयामश्चेत् धातूनां बहवः भेदाः सन्ति। प्रत्येकगणे निर्माणप्रक्रिया भिन्नास्ति। पुनः सकमर्कधातवोऽकर्मकधातवः परस्मैपदीधातवः आत्मनेपदीधातवः उभयपदीधातवः चेत्यादयो भेदाः सन्ति। एवं प्रकारेण सर्वेषां धातूनाम् अवस्थाद्वयमपि भवति सिद्धावस्था साध्यावस्था च। एतयोः सम्यग्ज्ञानार्थं धातूनां फलव्यापारात्मिका प्रवृत्तिरपि ज्ञातव्यास्ति। अत्र एतयोः विचनार्थं व्याकरणशास्त्रे आचार्यकौण्डभट्टलिखिते वैयाकरणभूषणसारग्रन्थे धात्वर्थस्य विवेचनं बहुसम्यक्तया प्राप्तं तत्र सर्वप्रथमं धात्वर्थस्योपरि अयं श्लोकः प्राप्यते - **फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥**[5] अस्याः कारिकायाः चतुर्विधा अर्थाः विद्यन्ते - क. फलव्यापारयोः वाचकाः धातवो भवन्ति। ख. फलाश्रयः (कर्म) व्यापाराश्रयः (कर्ता) इत्यनयोः वाचकाः तिङ्प्रत्ययाः भवन्ति। ग. फलं प्रति व्यापारः प्रधानं भवति अर्थात् धातूनां फलव्यापाररूपे अर्थद्वयं भवति तथापि व्यापारांशस्य मुख्यत्वेन व्यापारांशः विशेष्यम्, फलांशः विशेषणं भवति। घ. तिङस्य अर्थाः (कर्ता, कर्म, संख्या, काल) सर्वदा विशेषणं भवति। अत्र एतेषु प्रथमोऽर्थः मुख्यार्थो वर्तते अन्याः तु तस्य सहायकार्थाः सन्ति। व्यापारार्थस्य सिद्धये वाक्यपदीये एवमुक्तम् - **यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रित-क्रम-रूपत्वात् सा क्रियेत्यभिधीयते॥**[6] अर्थाद् - निष्पन्नावस्था स्याद् अथवा अनिष्पन्नावस्था उभयोः अवस्थयोः यस्य साध्यत्वम् अभीष्टं भवति सा क्रिया कथ्यते। यं कमप्यभिप्रायं प्रयोजनं स्वीकृत्य लोके कापि क्रिया प्रारम्भा भवति तत् फलं कथ्यते। यथा स्वर्गाभिलाषया यः यागः क्रियते तत्र 'स्वर्गः' यागस्य फलं विद्यते। भोजनं क्षुधा-निवृत्तये पच्यते तर्हि पचनस्य फलं 'क्षुन्निवृत्तिः' वर्तते। धनप्राप्तये राजाश्रयं गृह्येति तर्हि 'धन-प्राप्तिः' राजाश्रयस्य फलं वर्तते। **स्वरितञितः कर्त्रभिप्राये क्रिया फले**[7] अस्मिन्नपि सूत्रे एतादृशं फलमेव सूच्यते। साध्यत्वेन विवक्षितधातूनाङ्कृते 'पचति' इत्यादीनां प्रयोगो भवति। सैव क्रिया कथ्यते। यथा 'पचति' इत्यत्र पात्रस्य अग्नौ स्थापनम्, मध्ये-मध्ये दर्शनं फूत्कारं च, अनन्तरं अङ्गुल्या परीक्षणम् इत्यादयः क्रियाकलापाः 'व्यापाराः' कथ्यन्ते।

व्याकरणसम्मतमिममेव व्यापारं मीमांसकाः भावना इतिनाम्ना उद्भासन्ते। एवं प्रकारेण व्यापारस्य सरललक्षणम् एवं ज्ञातुं शक्यते - **'तद्धात्वर्थ-फल-जनकत्वे सति तद्धातुवाच्यत्वं व्यापारत्वम्' ।**[8] व्याकरणमतानुसारं प्रत्येकधातोः अर्थस्य अंशद्वयं भवति - 1. फलांशः, 2. व्यापारांशः। व्यापारांशतः एव फलांशः उत्पन्नो भवति। उदाहरणानि -

**क. हन्** - मारणम्, **फलम्** - प्राणानां वियोगः, **व्यापारः** - ग्रीवायाः छेदनम्, खड्गादीनां प्रहारः इत्यादयः।

**ख. चुर्** - चौर्यकरणम्, **फलम्** - अस्वकीयं वस्तु स्वकीयं करणम्, **व्यापारः** - तालस्य त्रोटनम् , आत्मानं गुप्तरूपेण प्रविष्टकरण्म् ।

**ग. लिख् -** लेखनम्, **फलम्** - पत्रादानामुपरि रेखा - विन्यासः, **व्यापारः** हस्तेन लेखनीधारणम्, मस्यां स्थापनम्, शनैःशनैः हस्तस्य व्यापृतकरणम्। पुनश्च धातूनामवस्थाद्वयं भवति एका **सिद्धावस्था**, द्वितीया **साध्यावस्था** च । यां श्रुत्वा श्रोतुः मनसि अन्या कापि आकांक्षा न भवति तस्य सम्पूर्ण अर्थस्य सम्यक्तया सम्पूर्णं ज्ञानं भवति सास्ति सिद्धावस्था एवमेव यां श्रुत्वा श्रोतुः मनसि तस्य फलस्य अथवा अन्यस्य वा आकांक्षा भवति सा भवति साध्यावस्था।

**सिद्धावस्था -** 'पचति' 'करोति' 'पठति' इत्यादीनां तिङ्न्तपदानां श्रुत्वा श्रोतुर्मनसि अन्यक्रियाणाम् आकांक्षा न भवति अत एताः तिङ्न्ताः क्रियाः सिद्धावस्थायाः कथ्यन्ते। अर्थात् उच्चारणानन्तरं पुनः क्रियान्तरस्य आकांक्षायाः अभावो भवति सा स्थिति सिद्धावस्था कथ्यते।[9] यथा देवदत्तो भोजनं पचति। छात्रो विद्यालयं गच्छति। मोहनो लेखं लिखति। दार्शनिकरूपेण चिन्तयामश्चेत् एषावस्था कार्यकारणयोः कार्यावस्था वर्तते।

**साध्यावस्था -** 'पाकः' 'चालः' इत्यादीन् पदान् श्रुत्वा श्रोतुः मनसि तस्य अग्रे ज्ञातुम् आकांक्षा भवति। सोऽग्रेऽपि जिज्ञासति यत् पाकस्य अग्रे किमभवत् ? सः नष्टोऽथवा निष्पन्नः वा। यावत् श्रोता अग्रिमां क्रियां न शृणोति तावत् तस्य जिज्ञासायाः शान्तिः न भवति। अस्याः अपरनाम कारणावस्थापि वर्तते यतोहि प्रत्येक-सिद्धकार्यस्य तत्पूर्वा कारणावस्थापि भवति यावत् कार्यं बाह्यकार्यरूपे सत्तां न प्राप्नोति तावत् मध्ये साध्यवस्थायां 'सत्' रूपे भवति।[10] सांख्यदर्शनस्य सत्कार्यवादस्य सिद्धान्तोऽत्र भवति। अत्र कारणावस्था पूर्वावस्था कथ्यते पूर्वावस्था अर्थात् व्यापृताकरणावस्था कर्तुः व्यापारयुक्ता भवति। यस्यां व्यापाराणां समाप्तिः भवति सा कार्याववस्था उत्तरावस्था कथ्यते।[11] इत्यस्याः ज्ञानाय घञादिप्रत्ययानां प्रयोगो भवति।

अत एता घञादिप्रत्ययान्ताः क्रियाः साध्यवस्थायाः क्रियाः कथ्यन्ते। पुनः अत्र वाक्यपदीये स्पष्टं क्रियते -

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।**
**सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥**[12]

सिद्धावस्थायां धातुवाच्य-व्यापारो द्रव्यवत् प्रतीयते यथा द्रव्येण सह लिङ्ग-विभक्ति-वचनानि च भवति तथैव तेन सह अपि भवति। परन्तु साध्यावस्थायां व्यापारम् अमूर्तभवनेन अद्रव्यवत् बोध्यते। अतः तेन सह लिङ्गविभक्तिवचनादीनां योगो न भवति। यथा भर्तृहरिमहाभागेनोक्तम् -

**सत्व-स्वभावमापन्ना व्यक्तिर्नामभिरुच्यते।**
**असत्व-भूतो भावश्च तिङ्पदैरभिधीयते॥**[13]

अनया सारणिमाध्यमेन उभयोः भेदः एवं विद्यते -

| क्र. | सिद्धावस्था | साध्यावस्था |
|---|---|---|
| 1. | सिद्धावस्थायाः क्रियायाम् अन्यक्रियायाः आकांक्षा न भवति सा स्वयमेव पूर्णा भवति यथा - देवदत्तः पचति। अत्र देवदत्तः किं करोति ? अस्योत्तरं देवदत्तः पचति इत्युक्तेनानन्तरं अन्यक्रियायाः आकांक्षा न भवति। | साध्यावस्थायाः क्रियायां सर्वदा अन्याः क्रियायाः आकांक्षा भवति। यथाः 'पाकः' इति कथनान्तरम् एवमाकांक्षा भवति यत् अग्रे किं जातम् ? भवति,जायते, विद्यते, नश्यति, इत्यादीनां क्रियाणामाकांक्षा भवति क्रियाणा-मध्याहारानन्तरं वाक्यं पूर्णं भवति। |
| 2. | सिद्धावस्थायाः क्रियायाः अन्यक्रियायां कारकत्वेन अन्वयं न भवति अपि तु अन्यकारकाणां तस्यामन्वयं भवति। | साध्यावस्थायाः क्रियाणां कारकत्वरूपेण अन्यक्रियाभिः सह अन्वयं भवति। यथा पाको जायते, पाकं प्रवर्तते, पाकेन क्षुन्निवर्तते इत्यादयः। |
| 3. | सिद्धावस्थायाः क्रियासु लिङ्गादीनां योगो न भवति। यथा 'पचति' अत्र कस्यापि लिङ्गस्य योगो नास्ति। | साध्यावस्थायाः क्रियासु लिङ्गादीनां योगो भवति । यथा - पाकः, पचनम्, गमनम् इत्यादयः। |

वस्तुतो घटः रामः इत्यादि शब्दानन्तरं केवलं कारकमात्रैव अर्थं न ज्ञापयति तस्य क्रियान्वितास्थितिरपि आवश्यकी वर्तते। घटः इत्यत्र पटः इति कारकस्य आकांक्षा न भवति अपितु क्रियायाः आकांक्षा भवति। अनयोः आधारमाध्यमेन आचार्याः नामाख्यातादीनां पृथक्-पृथक् विभाजनं कृतवन्तः।[14] अनेनाधारेण सिद्धावस्था तु सम्यक्तया पाठकाः ज्ञातुं शक्नुवन्ति परन्तु साध्यावस्थायां प्रश्नाः भवन्ति यत् व्याकरणे बहवः प्रत्ययाः सन्ति किं तेषु सर्वेः प्रत्ययाः साध्यवस्थायाः अथवा अन्याः वा अस्य स्पष्टोल्लेखनं सम्यक्तया व्याकरणशास्त्रे न प्राप्यते। अतः अत्र व्याकरणशास्त्रे विद्यमानानां

साध्यावस्थायाः प्रत्ययानासंक्षिप्तोल्लेखनमेवं विद्यते - पाणिनिव्याकरणेऽष्टाध्याय्यां **प्रत्ययः**[15] **परश्च**[16] अनयोः अधिकारसूत्रस्य व्याप्तिः **निष्प्रतिवाणिश्च**[17] अर्थात् पञ्चमाध्यायस्य परिसमाप्तिपर्यन्तं वर्तते। अत्र एते प्रत्ययानामवगमनायैषा सारिणी विद्यते।




अत्र रेखाचित्रमाध्यमेन प्रत्ययसारिणीकृता। एतेषु साध्यावस्थायां शब्दैः सह प्रयुक्तानां प्रत्ययानामत्र ग्रहणं न भवति। अतः तद्धितप्रत्ययानां स्त्रीप्रत्ययानाञ्चात्र ग्रहणं न भवति। पुनः धातुभिः सह प्रयुक्तेषु प्रत्येष्वपि तिङ्सम्बन्धिताः सर्वे प्रत्ययाः यथा - तिङ्प्रत्ययाः - तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त, आताम् , झ, थास्, आथाम्, ध्वम्, इड्, वहि, महिङ् (अष्टादश)। सनादयः - सन्, क्यच्, काम्यच्, क्यङ्, क्यष्, आचारक्विप्, णिच्, यङ्, यक्, आय्, ईयङ्, णिङ् (द्वादश)। विकरणप्रत्ययाः दशगणानाम् - शप्, श्लुः, श्यन्, श्नुः, शः, श्न, म्, उः, श्ना, णिच् (नव) इत्येषां ग्रहणं धातूनां सिद्धावस्थायां भवति अतः एतेषामपि अत्र ग्रहणं न भवति । एतदतिरिच्य ये तिङ्गभिन्नाः प्रत्ययाः सन्ति ते सर्वे साध्यावस्थायाः ज्ञापकाः सन्ति।[18] आहत्य पाणिनीय व्याकरणशास्त्रे कृत्यप्रकरणे पूर्वकृदन्तप्रकरणे उत्तरकृदन्तप्रकरणे नवाधिकमेकशतं प्रत्ययाः सन्ति यैः सह धात्वर्थः साध्यावस्थायां भवति। एतेषु सप्त तु कृत्यप्रकरणे एकसप्ततिः पूर्वकृदन्तप्रकरणे एकत्रिंशत् उत्तरकृदन्तप्रकरणे च सन्ति। यथा कृत्यप्रकरणे- तव्यत्, तव्य, अनीयर्, ण्यत्, यत्, क्यप्, केलिमर् च सप्त सन्ति। पूर्वकूदन्तप्रकरणे - ण्वुल्, तृच्, ल्यु, णिनि, अच्, कः, शः, णः, अच्, ष्वुन्, कन्,ण्युट्, वुन्, ट, खश्, खच्, अण्, ड, णिनि, टक्, ख्युन्, खिष्णुच्, खुकञ्, क्विप्, ण्वि, विट्, अण्, कप्, मनिनि, क्वनिप्, वनिप्, णिच्, अम्, क्विप्, क्वनिप्, क्त, क्तवतु, ङ्वनिप्, अतृन्, शानन्, चानश्, शतृ, शानच्, तृन्, इष्णुच्, क्ष्नुः, घिनुण्, वुञ्, युच्, उकञ्, षाकन्,

इनिः, आलुच्, रुः, क्मरच्, घुरच्, क्वरप्, ऊकः, रः, उः, कि, किनौ, नजिङ्, आरुः, क्रु, क्लुकनौ, वरच्, ष्ट्रन्, इत्र च एकसप्ततिः। उत्तरकृदन्तप्रकरणे - तुमुन्, ण्वुल्, अण्, घञ्, क, णच्, अञ्, इनुण्, अच्, अप्, ण, क्त्रि, अथुच, नङ्, नन्, क्तिन्, क्यप्, शः, क्तिन्, अङ्, युच्, ण्वुल्, इञ्, ण्वुच्, ल्युट्, घः, खल्, युच्, क्त्वा, ल्यप्, णमुल्, एकत्रिंशत् । एते प्रत्ययाः साध्यावस्थायाः ज्ञापकाः सन्ति। यथा - 1. छात्रः **गच्छन्** अस्ति। अत्र गच्छन् इत्यत्र पूर्वकृन्दतस्य शतृप्रत्ययो वर्तते। अस्ति इत्यक्रियायाः अनन्तरमेव वाक्यस्य समाप्तिः भवति। 2. छात्रस्य **गमनं** पश्यतु। अत्र गमनम् उत्तरकृदन्तस्य ल्युट्प्रत्यस्योदाहरणं विद्यते अस्य वाक्यस्य पूर्ण समाप्तिः 'पश्यतु' इतिक्रियायाः योजनानन्तरमेव अभवत् । भोजनस्य **पाकः** अभवत्, अत्र पाकशब्दे क्रियायाः पूर्णता 'अभवत्' इति क्रियानन्तरमेव भवति। एवमेव - कर्ता कारकः कर्तुं कृत्वा कुर्वन् संस्कृत्य पक्वः चेत्यादयः शब्दाः अपि साध्यावस्थायाः शब्दाः सन्ति। एवमन्यत्रापि ज्ञातव्यम् । एवं प्रकारेण उपर्युक्तलेखनाधारेण वयं साध्यावस्थायाः प्रत्यायानां सम्यग्ज्ञानं सम्यक्तया विश्लेषणञ्च कर्तुं शक्नुमः।

**सन्दर्भाः**


1. पस्पशाह्निकम् , महाभाष्यम्
2. ऋग्वेदः 4.58.3
3. वाक्यपदीयम् 1.43
4. चत्वारि पदजातानि नामाख्याते चोपसर्गनिपातश्च । निरुक्त 1.1.8, महाभाष्यम्, 1.1.1
5. वैयाकरणभूषणसारः धात्वर्थविवेचनम् 2
6. वाक्यपदीयम् 3.1
7. अष्टाध्यायी, 1.2.72
8. भैमीभाष्योपेते वैयाकरणभूषणसारे, पृ. 18
9. सिद्धत्वम् - क्रियान्तकाङ्क्षोत्थापकताकवैजात्यवत्वे सति।
   कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यतम् ।।
   परमलघुमञ्जुषा (धात्वर्थनिरूपणम् ), पृ. 27
10. सत्सु प्रत्ययरूपोऽसौ भावो यावन्न जायते।
    तावत् परेषां रूपेण साध्यः सन्नभिधीयते।। वाक्यपदीयम् 3.8.16
11. तत्र व्यापृतं व्यापारावसाने सत्तां समासाद्यास्तीति पूर्वव्यापाराध्यारोपेणाभिधीयते। वाक्यपदीम् 3.8.16
12. वाक्यपदीयम् 3.8.45
13. वाक्यपदीयम् 2.195
14. निरुक्तम् 1.1
15. अष्टाध्यायी 3.1.6
16. अष्टाध्यायी 3.1.2
17. अष्टाध्यायी 5.4.160
18. कृत्यक्तखलर्थानां तथा व्ययकृतामपि।
    रुढिनिष्ठघञादीनां धातुः साध्यस्य वाचकः।। वाक्यपदीय 3.8.52

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# अर्वाचीन-संस्कृतवाङ्मये सङ्गणकीय-भाषाविज्ञानस्योपादेयता

**प्रभातसरकारः* डॉ. ओ.जी.पी. कल्याणशास्त्री***

**सारः -** आधुनिकयुगे संस्कृतभाषाप्रसारणे भाषाप्रौद्योगिक्याः महती भूमिका लक्ष्यते। विगतार्धशताब्ध्यां कम्प्यूटेशनल-भाषाविज्ञानस्य भाषाप्रौद्योगिक्याः च क्षेत्रेषु घातीयवृद्धिरभवत्। यन्त्रानुवादः, सूचनापुनर्प्राप्तिः, सूचनानिष्कासनं, अन्वेषणयन्त्राणि, प्रश्नोत्तरप्रणाल्याः इत्यादयः सम्बद्धाः तन्त्रांशाः (Software) उपलभ्यन्ते, निरन्तरं च वर्धिताः सन्ति। एतादृशानि साधनानि न केवलं आधुनिकभाषाणां कृते उपयोगिनो भवन्ति, अपितु शास्त्रीयभाषाग्रन्थान् सुलभया विवरणं कर्तुं महत्त्वपूर्णा भूमिकां निर्वहन्ति। अस्य शोध-आलेखस्य केन्द्रभूतविषयः संस्कृतभाषाशास्त्रविकासे प्रसारण च कथं सङ्गणकीयभाषाविज्ञानस्योपयोगी भवतीति, कथं केनोपायेन वा तेषां प्रयोगः विधीयते इत्येते अंशाः उदाहरणपुरस्सरमत्र विर्चायते।

**कूटशब्दा :** सङ्गणकम्, भाषाप्रौद्योगिकी, प्रत्ययरेखाङ्कनम्, कृतकप्रज्ञासाधन-विज्ञानम, NLP, ACL

आधुनिकसङ्गणकयुगेऽस्मिन् ज्ञाननिरूपणाय नवनवपन्थानः आविष्कृताः। सङ्गणकीयभाषाविज्ञानं प्राकृतिकभाषायाः कम्प्यूटेशनल मॉडलिंग् इत्यनेन सह सम्बद्धं अन्तरविषयक्षेत्रम् अस्ति, तथैव भाषावैज्ञानिकप्रश्नानां समुचितगणनात्मकदृष्टिकोणानां अध्ययनं च सामान्यतया कम्प्यूटेशनल्-भाषाविज्ञानं, सङ्गणकविज्ञानं, कृत्रिमबुद्धिः, गणितं, तर्कशास्त्रं, दर्शनं, संज्ञानात्मकविज्ञानं, संज्ञानात्मकमनोविज्ञानं, मनोभाषाविज्ञानं,

* शोधार्थी, शब्दबोधविभागः, राष्ट्रीयसंस्कृतविश्वविद्यालयः, तिरुपतिः
** सहायकप्राध्यापकः, न्यायविभागः, राष्ट्रीयसंस्कृतविश्वविद्यालयः, तिरुपतिः

मानवशास्त्रं, तंत्रिकाविज्ञानं च इत्यादीनां आधारेण आकर्षयति। परम्परागतरूपेण कम्प्यूटेशनल् भाषाविज्ञानं प्राकृतिकभाषायाः संसाधने सङ्गणकस्य अनुप्रयोगे विशेषज्ञतां प्राप्तैः सङ्गणकवैज्ञानिकैः क्रियमाणस्य कृत्रिमबुद्धेः क्षेत्ररूपेण उद्भूतम् - ''एसोसिएशन फॉर् कम्प्यूटेशनल लिंग्विस्टि्स्'' (ACL)[1] इत्यस्य निर्माणेन स्वतन्त्रसम्मेलनशृङ्खलायाः स्थापनायाः च कारणेन 1970 तमे 1980 तमे दशके अयं क्षेत्रः आलोकितः अभवत् ।

''कम्प्यूटेशनल् लिंग्विस्टिक्स् एसोसिएशन्'' सङ्गणकीयभाषाविज्ञानमित्यस्य परिभाषां करोति यत् - सङ्गणकदृष्ट्या भाषायाः वैज्ञानिकमध्ययनं प्रचलति।[2] सङ्गणकीयभाषाविदः विविधप्रकारस्य भाषाविज्ञानस्य घटनानां गणनाप्रतिरूपं प्रदातुं रुचिं लभन्ते ''गणनात्मकभाषाविज्ञानम्' इति पदं अद्यत्वे (2023) प्राकृतिकभाषासंसाधनस्य (NLP) भाषाप्रौद्योगिक्याः च निकटपर्यायत्वेन गृह्यते। एतानि पदानि सैद्धान्तिकजिज्ञासायाः अपेक्षया व्यावहारिकप्रयोगपक्षे अधिकं बलं ददति। व्यवहारे ते एनएलपी/एसीएल समुदाये 'गणनाभाषाविज्ञानम्' इति पदस्य स्थाने बहुधा स्थापिताः, यद्यपि ते विशेषतया अनुप्रयुक्तगणनाभाषाविज्ञानस्य उपक्षेत्रं निर्दिशन्ति, केवलं कम्प्यूटेशनल् भाषाविज्ञानस्य सैद्धान्तिकं प्रयुक्तं च घटकं भवति। सैद्धान्तिकगणनाभाषाविज्ञानं सैद्धान्तिकभाषाविज्ञानस्य संज्ञानात्मकविज्ञानस्य च विषयेषु केन्द्रितमस्ति। सैद्धान्तिगणनाभाषाविज्ञाने व्याकरणस्य (पार्सिंग्) शब्दार्थशास्त्रस्य च औपचारिकसिद्धान्तानां विकासः अन्तर्भवति, येन प्रायः औपचारिकतर्कयोः प्रतीकात्मक (ज्ञान-आधारितेन) दृष्टिकोणेन च आधारिताः सन्ति। गणनाशब्दार्थशास्त्रे भाषावैज्ञानिकार्थपतिपादनार्थं उपयुक्ततर्कानाम् परिभाषा तथा स्वयमेव तंषा स्वरूपं निर्मीयते, तेषां सह तर्कञ्च अन्तर्भवति।

**प्रत्ययरेखाङ्कनपद्धतिः**

(Conceptual Graphs-Representation Scheme)

प्रमेयप्रतिपादकरेखाचित्राणि (Conceptual Graphs) John F Sowa महाभागेन आविष्कृतः नूतनः ज्ञाननिरूपणस्य पन्थाः। पाश्चात्यभाषा शास्त्रस्य तथा कृतकप्रज्ञासाधनविज्ञानस्य (Artifical Intelligence) च गुणांशनां संयोजनेन C.S. Peirce's existential Graphs[3] इत्येतस्य ज्ञाननिरूपणपद्धतेः परिष्कृतं रूपमेवैतत्।

पाश्चात्यतर्कशास्त्रीयज्ञाननिरूपणपद्धतौ अनुमानानुकूला अंशाः प्राधान्यं भजन्ते। वाक्यार्थभूतः प्रमेयः गौणः। तस्मादेवेयं तर्कशास्त्रीयनिरूपणपद्धतिः सामान्यभाषाभ्यः सुदूरा सती दुर्वेद्या भवति। तर्कानुकूलत्वेऽपि नास्ति सुगाह्यत्वमिति ततोऽपि सुग्रहाणां ज्ञानाकारनिरूपणपद्धतीनामाविष्करणाय बहुप्रयासः विहितः। तत्रान्यतामे प्रयासः । रेखाचित्रद्वारा प्रमेयाणां तत्सम्बन्धानां च निरूपणादयं सर्वेषामपि सुग्राह्यो भवति। इत्थं सहजभाषाणामिव अर्थाभिव्यञ्जकत्वशत्तिः (Expressive Power)

कृतकभाषाणामिव शाब्दबोध-प्रक्रियानुकूलत्वञ्चास्यां प्रत्ययरेखाङ्कनपद्धतौ "Conceptual Graphs" सम्पादितमिति अस्याः पद्धतेः वैशिष्ट्यम् ।

सैषा पद्धतिः संस्कृतभाषाज्ञाननिरूपणपद्धत्या नैकेषु अंशेषु साम्यं भजते। तस्याः पद्धतेः प्रधानांशाः अत्र उपस्थाप्यन्ते। ज्ञानाकारनिरूपकरेखाचित्रेषु आयताकारेण चतुरस्रेण पदार्थो निरूप्यते, वृत्तेन च सम्बन्धः। अत्र दृष्टान्तरूपेण नैकविधानि वाक्यानि स्वीकृत्य तन्निरूपणं रेखाङ्कनपद्धत्या प्रदर्श्यते।

सोदाहरणमिदं निरूपयामः-

**हरिः वनं गच्छति।**

[कश्चित्पुरुषः-हरिः]←—(कर्ता) ←— [गमनम्]—→ (कर्म) —→[किञ्चित्स्थलम्-वनम्]




अनेन चिह्नेन सम्बन्धस्य निष्ठत्वं वृत्तित्वं वा निरूप्यते।

अनेन चिह्नेन अभेदसम्बन्धः।

वै - हरिरभिन्नैककर्तृकः वर्तमानकालिकवननिष्ठोत्तरदेशसंयोगानुकूलव्यापारः।

नैयायिकास्तावत् प्रथमान्तमुख्यविशेष्यकबोधं वर्णयन्ति, तेषां मते -



› अनेन चिह्नेन अनुकूलत्वं सूचयति।

⇕ अनेन चिह्नेन निष्ठत्वं वृत्तित्वं वा सूचयति।

═ अनेन चिह्नेन आश्रयत्वं सूचयति।

⋙ अनेन चिह्नेन निरूपकत्वं सूचयति।

**तथा च - वननिष्ठकर्मतानिरूपकगमनानुकूलकृतिमान् हरिः इति शाब्दबोधः।**

अत्र त्रयः पदार्थाः - हरिः, गमनं वनञ्चेति। एतत्पदार्थत्रयं द्वाभ्यां सम्बन्धाभ्यामन्वितम्। सम्बन्धौ च कर्तृत्वं कर्मत्वञ्च। गमनं कर्तृतासम्बन्धेन हरिणा सम्बन्धाति, कर्मतासम्बन्धेन हरिरभिन्नकर्तृकं वनाभिन्नकर्मकञ्च वर्तमानकालिकं गमनम् ।

इदं रेखीयचित्राणामेकं स्वरूपं भवति यत्र चित्राणि सङ्केतितानि भवन्ति । संस्कृतभाषाशास्त्रपाठयितुं निर्देशयोग्यानां विषयाणां प्रदर्शने अस्य प्रयोगः सहजतया दर्शकाभिमुखे प्रदर्श्यते । अन्या पद्धत्या संस्कृतभाषाशास्त्रस्य विकासः परिलक्षते।

**देशे विदेशे च क्रियमाणम् एतद्विषयकं कार्यम्**

2500 वर्षाणाम् अधिकदीर्घा अद्यापि विद्यमानव्याकरणपरम्परया सह भाषाविश्लेषणक्षेत्रे संस्कृतस्य अद्वितीयं स्थानं गृह्णाति । संस्कृतव्याकरणस्य भारते गणितस्य सदृशं स्थानं वर्तते। पाणिनीयव्याकरणस्य भारतीयव्याकरणपरम्परायां महत्त्वपूर्णं स्थानमस्ति। अन्यभाषाव्याकरणानां विपरीतः अयं प्रायः पूर्ण अस्ति च तथा च शाब्दबोधस्य (वाचिकबोधस्य) सिद्धान्तैः सह मिलित्वा एतत् व्याकरणं भाषा विश्लेषणस्य अपि च जननस्य सम्पूर्णव्यवस्थां प्रददाति, अतः मूलसंस्कृतग्रन्थानां पूर्णतया निष्ठया शक्नुवन्तः, भाषाविश्लेषणार्थं गणनासाधननिर्माणार्थं एतेषां सिद्धान्तानां उपयोगस्य अन्वेषणं स्वाभाविकम् -

(क) अद्यतनकाले गोयल, कुलकर्णी, बेहेरा (2009), मिश्रा (2009), सुब्बन्ना, वरखेदी (2009), व्युत्पत्तिप्रक्रियाश्च गणनापूर्वकं अनुकरणं कृत्वा अष्टाध्यायीग्रन्थस्य नियमानां कार्यान्वयनार्थं अनेकाः प्रयत्नाः कृताः।[4]

(ख) K.V. Ramakrishnamacharyulu, Kulkarni महोदयने 2013 वर्षे Parsing Sanskrit texts : some relation specifice issues इति ग्रन्थे सन्धि-कारक-प्रभृति-विषयकनियमाः रेखाचित्रनिरूपणपद्धत्या निरूपितवन्तः। येन न केवल भारतीयानां कृते अपितु वैदेशिकानां कृते अपि संस्कृतभाषाशास्त्रशिक्षणे महदुपकारकः।

(ग) पवनकुमारसतुलुरी (2016) इत्यनेन अष्टाध्याय्याः वर्णितप्रक्रियायाः अनुसरणं कृत्वा यौगिकजनरेटरः विकसितः।[5]

(घ) कृष्णः गोयलः च (2016) अष्टाध्यायात् सूत्रं वस्तुरूपेण प्रतिनिधियति इति तद्धित (द्वितीयकव्युत्पन्न) जनरेटरं वर्णयन्तौ। तौ बहुविधविचाराणां द्वन्द्वनिराकरणप्रविधिभिः च सम्बद्धानां समस्यानां चर्चां कुर्वतः।[6]

(ङ) पटेलः कतुरी च (2016) ''NLP क्रमं सूत्राणां'' वर्णनं कृत्वा सिद्धान्तकौमुदीयां व्यवस्थापितं सुबन्त (नाममात्रविभक्तयः जनननियमान् कार्यान्वितवन्तौ तथैव प्रयत्नेन स्वामी शिवमूर्तितारालाबालु इत्यनेन संज्ञाजननकर्ता विकसितः।[7]

(च) अद्यतनविकासेषु सोहोनी, एम.ए. कुलकर्णी (2018) इत्यनेन एकं सिमुलेटरं विकसितं यत्र ते प्रत्येकं पाणिनीयसूत्रस्य अनुवादं हास्केल मॉड्यूलरूपेण कुर्वन्ति।

1960 दशके सैद्धान्तिके तथा गणकीये भाषाविज्ञाने चित्रालम्बनार्थ निरूपणपद्धतयः प्रथिताः आसान्। तदानीं नैकैः विद्वद्भिः Semantic Network, Correlational Nets, Dependencey Graphs इति विविधाः पद्धतयः आविष्कृताः। एतासु सर्वासु पद्धतीषु आनुमानिकगुणाः नोपलभ्यन्ते स्म। तदर्थं सप्ततितमे दशके सर्वानेतान् गुणान् सङ्कलय्य कान्सप्चुवल् ग्राफ इति नाम्ना नूतना पद्धतिः आविष्कृता। अत्र अर्थानां सम्बन्धानाञ्च यथा निरूपणं तथा तर्कानुकूलसम्बद्धानाञ्च सम्यक् निरूपणं परिकल्पितम् ।

**उपसंहारः**

केचन परियोजनाः अद्यापि समस्यायाः समाधानं कर्तुं प्रयतन्ते यया प्रथमस्थाने सङ्गणकभाषाविज्ञानं स्वक्षेत्ररूपेण आरब्धम् । परन्तु पद्धतयः अधिकपरिष्कृताः अभवन, फलतः गणनाभाषाविदैः उत्पन्नाः परिणामाः अधिकबोधप्रदाः अभवन्। सङ्गणक-अनुवादस्य उन्नयनार्थं बहुविधः कार्यक्रमः प्रचलन् अस्ति, क्रियानुवादे प्रयोक्तुं तेषां विशिष्टपरिष्कारेण जर्मन-फ्रेञ्च-शब्दानां संस्कृतभाषायाम् स्वाभाविकं अनुवादं उत्पादयितुं वहवो प्रयासः विहितः, येन अन्येभ्यः वैज्ञानिकेभ्यः स्वपरिणामेषु अधिकं विशोधनक्षमता वर्धिताः। एवंविधः कार्यः सङ्गणकभाषाविज्ञानक्षेत्रे विशिष्टस्थानं लभते।

वैज्ञानिकेऽस्मिन् जगति संस्कृतभाषाशास्त्रस्याध्ययने अध्यापने च अद्यत्वे सर्वत्र कृत्रिमं वातावरणमेव दृश्यते। नैसर्गिकरीत्या संस्कृतभाषाशास्त्रध्यापनस्य कृते यन्त्राणि विविधानि आवश्यकानि सन्ति। एवं समीचीनेन सम्प्रत्ययेन संस्कृतभाषाशास्त्रमध्यापयितुं सङ्गणकभाषाविज्ञानस्य प्रयोगः सावधानेन कक्ष्यास्तरे करणीयः। अनेन प्रकारेण संस्कृतवाङ्मयविकासाय सङ्गणकीयभाषाशास्त्रस्य प्रयोगः कर्तुं शक्यते इति शम् ।

## सन्दर्भाः

1. "ACL Member Portal / The Association for Computational Linguistics Member Portal" www.aclweb.org Retrieved 2020-08-17
2. ...the scientific study of language from a computational perspective. Computational linguists are interested in providing computational models of various kinds of linguistic phenomena.
3. Knowledge Representation, पृ. 71
4. Sanskrit Parsing, पृ. 3
5. Sanskrit Parsing, पृ. 3
6. Sanskrit Parsing, पृ. 3
7. Sanskrit Parsing, पृ. 3

## सन्दर्भग्रन्थ-सूची

1. Sanskrit Parsing (based on the theories of sabdabodha) - Dr. Amba Kulkarni (2019)
2. Knowledge Representation - Shrinivasa Varakhedi (2013)
3. Conceptual Graphs - John F. Sowa (2008)
4. Parsing Sankrit Texts : some Relation Specific Issues - K.V. Ramakrishnamacharyulu, Kulkarni (2013)

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# रघुनाथशिरोमणिस्वीकृतानां नवीनपदार्थानामालोचना

**सन्दीपमल्लिकः***

**सारः -** रघुनाथशिरोमणेः पदार्थतत्त्वनिरूपणमित्येको स्वतन्त्रः तत्त्वमीमांसीय-ग्रन्थः यत्र न्यायवैशेषिकपरम्पराम् अतिरिच्य नवीनतया पदार्थतत्त्वस्य विश्लेषणं विहितम् । तस्य आलोचनाधारायां यथा लौकिकता परिस्फुटा तथैव भारतीयदर्शनस्थस्य विशेषेण मीमांसादर्शनस्थस्य मतसाम्यं परिलक्ष्यते। तेन न्यायवैशेषिकसम्मतानां सप्तपदार्थानां परीक्षणानन्तरं तादृशः एक अष्टमः पदार्थः स्वीकृतः यस्य भावाभावयोः कुत्रापि अन्तर्भावो न भवति। तेन तु द्रव्यादिसप्तपदार्थातिरिक्ता अष्टौ पदार्था स्वीकृताः। ते हि - क्षणः, स्वत्वं, शक्तिः, संख्या, वैशिष्ट्यं, विषयता, कारणत्वं कार्यत्वञ्चेति। तानि इदानीम् एकैकशः रघुनाथशिरोमणिदृशा व्याख्यायते। तेषामेव मतानां यथासम्भवं निरूपणचेष्टाम् अस्मिन् शोधप्रबन्धे विहितम् ।

**कूटशब्दाः -** पदार्थाः, विषयता, कारणत्वं, रघुनाथ-शिरोमणिः, मीमांसा।

न्यायसूत्रे प्रमाणप्रमेयेत्यादिषोडशपदार्थानां तत्त्वज्ञानात् निःश्रेयसः तथा मुक्तिर्भवति।[1] तेन उल्लिखितं 'निश्चितं श्रेयो निःश्रेयसम्' इति। ततः द्रव्याद्याभावान्ताः सप्तपदार्था इति वैशेषिकसिद्धान्तः। अतः प्रशस्तपादभाष्ये उच्यते - 'द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः' इति।[2] परन्तु न्यायवैशेषिकयोः पदार्थविषये परस्परविवादो नास्ति। न्यायवैशेषिकदर्शने द्वौ पदार्थौ स्वीकृतौ भावः अभावश्चेति। पदार्थसप्तकमध्ये द्रव्यगुणकर्मसामान्यविशेषसमवायाः सप्त भावपदार्थाः, अन्तिमश्च अभावपदार्थः। नव्यन्याये प्रसिद्धतार्किकेण रघुनाथशिरोमणिना स्वकीये पदार्थतत्त्वनिरूपणग्रन्थे

*सहाध्यापकः संस्कृत-विभागः, स्वामी निसम्बलानन्द-गार्लस्-कलेज् हुगली, पश्चिमबङ्गम्

न्यायवैशेषिकस्वीकृतस्य विशेषस्य पृथक् पदार्थत्वम् अस्वीकृत्य खण्डितम्। द्रव्यादिसप्तपदार्थातिरिक्ता ते क्षणः, स्वत्वं, शक्तिः, संख्या, वैशिष्ट्यं, विषयता, कारणत्वं कार्यत्वञ्चेति पदार्थं स्वीकृतवान् ।

**क्षणः**

न्यायवैशेषिकदर्शने कालावधित्वेन क्षणः स्वीकृतः। महाकालस्य एकत्वेऽपि तस्य क्षण-कला-दण्ड-मुहूर्त-प्रहर-दिन-पक्ष-मास-वत्सरादिखण्डकालत्वेन व्यवहारो दृश्यते। प्राचीना वदन्ति यत् क्षणत्व-कलात्व-काष्ठात्वादीनां परस्परविरुद्धधर्मत्वात् एतेषां खण्डकालत्वेन व्यवहारः असम्भवः। एषः क्षणः, एतद् दिनम् इति प्रतीतिद्वयस्य विषयस्तु न एकः। क्षणदिनयोः अभिन्नत्वं न केनापि स्वीक्रियते। अतः कालोपाधिभूताः ये क्रियादयः ते एव क्षणदिनादिव्यवहारस्य नियमाकत्वेन स्वीकर्त्तव्या। प्राचीनैस्तु या कापि एका क्रिया चतुःक्षणस्थायित्वेन स्वीकृता। क्षणचतुष्टमध्ये आद्यक्षणं निरूपणीयञ्चेत् स्वजन्यविभागस्य प्रागभावविशिष्टं क्रियारूपं कर्म प्रथमक्षणव्यवहारोपयोगिकालोपाधित्वेन स्वीकरणीयम् । एवं स्वजन्यपूर्वसंयोगविशिष्टः विभागो हि द्वितीयक्षणोपाधिः। स्वजन्यपूर्वसंयोग-नाशकालीनोत्तरसंयोगप्रागभावो हि तृतीयक्षणोपाधिः स्वजन्योत्तरसंयोगविशिष्टा क्रिया हि चतुर्थक्षणोपयोगी कालोपाधिः। ननु पूर्वोक्तरूपेण चतुर्थक्षणं यावत् प्रतीयमानोऽपि पञ्चक्षणादिषु किं भवेत्। विषयेऽस्मिन् प्राचीना वदन्ति यत् महाप्रलयपर्यन्तं निरवच्छिन्नतया क्रियाप्रवाहः प्रचलति। अतः पूर्वोक्तरीत्या क्रियान्तरम् अवलम्ब्य पञ्चममादिक्षणव्यवहार-साधककालोपाधेः निरूपणं सम्भवति।

रघुनाथशिरोमणिना पूर्वोक्तानि प्राचीनमतानि खण्डीकृत्य क्षणस्य पदार्थत्वेन स्वातन्त्र्यं निरूपयितुमुक्तं- क्षणश्च क्षणिकोऽतिरिक्तो कालोपाधिः। तेनोक्तं भावाभावेभ्यः पदार्थेभ्यः अतिरिक्तः पदार्थो हि कालोपाधिः। अयं क्षणपदार्थः एव क्षाव्यवहारविषयः। अयं क्षणपदार्थः क्षणिकः अर्थात् उत्पत्तिक्षणमात्रस्थायी।[3] प्राचीनमतसिद्धः क्रियाविशेषः क्षणव्यवहारोपयोगिकालोपाधित्वेन न स्वीकर्तव्यः। अस्य क्षणपदार्थस्य क्षणिकत्वात् द्रव्यादिभ्यः सप्तपदार्थेभ्यः वैलक्षण्यं सूचितम्। क्षणपदार्थस्य क्षणिकत्वाभावे तु घटस्य प्रागभावक्षणे अपि इदानीं घटः इति व्यवहारापत्तिः स्यात्। उक्तापत्तिनिवारणाय क्षणस्य क्षणिकत्वं स्वीकर्तव्यम् ।

**शक्तिः**

कार्य-कारणशब्दौ परस्परं सापेक्षौ। कार्यं स्वस्वरूपाय कारणमपेक्षते। कार्यकारणसम्बन्धस्य व्याख्याकारणाद् एव नव्यन्यायः अवच्छेदकशास्त्रत्वेन अभिधीयते। कार्यें द्विविधा कारणता स्वीक्रियते - समुदायत्वरूपेण कारणत्वरूपेण च। कारणतायाः द्वैविध्यमाधारीकृत्य रघुनाथशिरोमणिना द्वयोः अतिरिक्तपदार्थयोः कल्पना कृता - शक्तिः कारणता चेति। कार्यकारणयोः परस्परं सम्बन्धहेतोः कार्यत्वम् अतिरिक्तपदार्थत्वेन

स्वीकृतम् ।

प्रभाकरमीमांसकैरपि शक्तेः स्वातन्त्र्यं स्वीकृतम्। यथा अग्नौ दाहकताशक्तिरस्ति। अस्याः दाहकतायाः अभावे तु अग्नेः अस्तित्वं नास्ति। शक्तेः पदार्थत्वेन सिद्धिः अनुमानप्रमाणेनैव सम्भवति, न तु प्रत्यक्षेण।[4] शक्तेः कार्यत्वेनोत्पत्तिः तस्य आश्रयीभूतकारणादेव भवति। कार्यस्य अनुत्पत्तिदशायां कारणसमुदायस्य विद्यमानतायां शक्तेः द्विविधा अवस्था विद्यते - अभिनवः विनाशश्च।[5] चन्द्रकान्तमणेः संस्पर्शेण अग्नेः दाहो न भवति, परन्तु अपसारिते तु तस्मिन् पुनर्दाहो भवति। यत्र तु कार्यं न दृश्यते तत्र विनाशशक्तिः स्वीकर्त्तव्या।

वैशेषिकसम्मतेभ्यः सप्तदार्थेभ्यः शक्तेः पदार्थत्वेन स्वातन्त्र्यसिद्धिः एवं विहिता - गुणकर्मादिषु पृथिव्यादिद्रव्यं न तिष्ठति। शक्तिस्तु गुणकर्मादिष्वपि न तिष्ठति। अतः शक्तिः न गुणः नापि कर्म। सामान्यम्, विशेषः, समवायः, अत्यन्ताभावः, अन्योन्याभावः चेति पदार्थानाम् उत्पत्तिः विनाशश्च न भवति। परन्तु शक्तेः उत्पत्तिः विनाशश्च भवति। शक्तेः उत्पत्तिहेतोः अनादिः प्रागभावश्च न भवति। यद्यपि सामयिकाभावः उत्पत्तिविनाशवान् तथापि शक्तिस्तु भावपदार्थः। अतः शक्तेः सप्तपदार्थेभ्यः स्वातन्त्र्यं भावत्वं च सिद्धं भवति।[6]

प्राचीनन्यायवैशेषिकदर्शनानुसारं अग्नेरुत्पत्तिः अनेकप्रकारेण भवति। तृणवायोः सम्पर्केण, अरणिद्वयसंघर्षेण, सूर्यकान्तमणि-सूर्यकिरणयोश्च सम्पर्केण। एवं तृणारणिसूर्यकान्तमणिभिः त्रिभिः भिन्नैः कारणैः अग्नेरुत्पत्तिः भवति। वस्तुतः एकस्मादेव कारणात् एकस्यैव कार्यस्योत्पत्तिः भवति। द्वाभ्यां भिन्नकारणाभ्यां द्वयोः कार्ययोः उत्पत्तिः भवति। परन्तु प्राचीनाः नैयायिकास्तु अत्र तृणजन्ये अग्नौ, अरणिजन्ये अग्नौ, मणिजन्ये चाग्नौ अग्नित्वजातेः कल्पनां कुर्वन्ति। परन्तु रघुनाथशिरोमणिनये तु अयं सिद्धान्तः गौरवदोषापन्नः। अतः त्रिभिः कारणैः उत्पन्नेषु त्रिविधेषु अग्निषु त्रिविधां वह्नित्वजातिं न स्वीकृत्य एका एव उत्पादिका शक्तिः स्वीकर्त्तव्या, लाघवात् ।[7]

ननु अतिरिक्तशक्तिकल्पनापेक्षया वह्निकारणत्वरूपा एका जातिः स्वीकर्त्तव्या इति चेन्न जातिसङ्करापत्तेः। किञ्च, कार्यकारणयोः सहोपस्थितिनियमानुसारं सहानुपस्थितिनियमानुसारं वा यदि तृणारणिमण्यादिषु कारणत्वं स्वीकर्त्तव्यं चेत् तर्हि अपि जातित्रयकल्पनापेक्षया वह्निजनकत्वरूपा एका शक्तिः स्वीकर्त्तव्या।[8] मीमांसकानां शक्तिवादः अपूर्वसिद्धान्तमाधारीकृत्य प्रतिष्ठितः। परन्तु रघुनाथशिरोमणेः शक्तिवादः कारणताम् आश्रयति। किञ्च मीमांसकाः शक्तेः भावत्वं स्वीकुर्वन्ति। किन्तु रघुनाथशिरोमणिना शक्तिः भावाभावातिरिक्तपदार्थत्वेन स्वीकृतः। तेन कार्यकारणमाधारीकृत्य शक्तेः पदार्थत्वेन स्वातन्त्र्यं स्वीकृतम् । कस्यचिद् वस्तुनः पूर्वरूपं

हि कारणम् परवर्तिरूपं हि कार्यम्। आचार्येण अन्नंभट्टेन कारणस्य लक्षणमुक्तं- अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववृत्ति कारणम् ।[9] उदयनाचार्येणोक्तं यत् कार्योत्पत्तेः पूर्वं यन्नियतं तिष्ठति तत्कार्यस्य कारणम् । अतः नियतपूर्ववृत्तित्वमेव कारणत्वम् ।

**कार्यता-कारणता च**

कार्यत्वस्वरूपविषयेऽपि मतानैक्यं दृश्यते। केषाञ्चन नये अनन्यथासिद्धेः अनिरूपकत्वे सति कारणव्याप्यत्वं कार्यत्वम्।[10] केचन वदन्ति यत् कारणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वं कार्यत्वम्। केचन पुनः वदन्ति यत् प्रागभावप्रतियोगित्वं कार्यत्वम् । एवं कार्य-कारणयोः निर्णितेऽपि तयोः निर्दुष्टं लक्षणं न निर्णीतम् । तस्मादेव रघुनाथशिरोमणिना पूर्वाचार्याणां पद्धतिं परित्यज्य कार्यत्व-कारणत्वयोः पदार्थत्वेन स्वातन्त्र्यं स्वीकर्तुमुक्तं यत् - कारणत्वं द्रव्यगुणादिषु न अन्तर्गच्छति। तत्तु स्वतन्त्रः पदार्थः प्रसङ्गेऽस्मिन् रघुनाथशिरोमणिना उक्तं यत् न हि एका एव कारणता सकलकारणेषु अभिन्ना। दण्ड-तन्त्वादेः कारणवैभिन्न्यात् दण्डत्वचक्रत्वादि-कारणतापरिच्छेदधर्माणां भिन्नताहेतोः कारणतापि एका एव। अतः दण्डगतायां कारणतायां घटादिकार्यनिष्ठं कार्यतानिरूपितत्त्वं दण्डत्वावच्छिन्नत्वं च स्यात् । परन्तु अत्र पटादिनिष्ठं कार्यतानिरूपितत्वं तन्तुत्वावच्छिन्नत्वं च न स्यात् ।[11]

ननु कार्यताकरणतयोः यथाक्रमं कार्यकारणभेदेन अवच्छेदकधर्मभेदेन भिन्नत्वे सति स्वीकृते दण्डः कारणम्, तन्तुः कारणम् इत्याद्यनुगतप्रतीतिः कथं स्यादिति चेद् रघुनाथशिरोमणिना उक्तं - कार्यभेदे कारणभेदे च कार्यतायाः कारणतायाश्च भेदे स्वीकृतेऽपि सकलकारणतानिष्ठं कारणतात्वं सकलकार्यतानिष्ठं कार्यतात्वं सर्वेषु कारणेषु कार्येषु च अनुगतधर्मत्वेन स्वीकृतत्वात् दण्डः कारणम्, चक्रं कारणम् घटः कार्य पटः कार्यम् इत्येवम् अनुगतकार्यकारणभावप्रतीतिः निर्बाधं भवति।[12] केषाञ्चन प्राचीनसम्प्रदायानां नये कारणत्वप्रतियोगित्वं हि कार्यत्वम् । परन्तु प्राचीनानां मतेऽस्मिन् असम्मतिः प्रदर्शिता। तेनोक्तं यत् कारणताप्रतियोगित्वस्य कार्यत्वं चेत् विनिगमनाप्रयुक्तकार्यताप्रतियोगित्वस्य कारणत्वं वक्तव्यम्। तेन लाघवात् कार्यत्व-कारणत्वयोः स्वातन्त्र्येण अङ्गीकारः कर्त्तव्यः।

**संख्याः**

न्यायवैशेषिकसम्प्रदाये चतुर्विंशतिः गुणाः स्वीकृताः।[13] रूपरसादेरिव गुणस्यापि गुणविभाजकसूत्रे समुल्लिखितत्वात् गुणपदार्थत्वम्। न्यायवैशेषिकदर्शने संख्या गुणत्वेन स्वीकृता। परन्तु प्राभाकरमीमांसकाः संख्या द्रव्यगुणादेरतिरिक्तत्वेन स्वीकृता। मन्ये प्राभाकरमतं समर्थयितुं रघुनाथशिरोमणिना वैशेषिकसम्मतसिद्धान्तं खण्डयितुं च संख्यायाः गुणपदार्थातिरिक्तत्वं प्रतिपादितम्। संख्या तु

द्रव्यगुणादिपदार्थव्यतिरिक्तः। संख्यायाः गुणभिन्नत्वं प्रतिपादयितुं तेन अनुकूलयुक्तिः प्रदर्शिता गुणकर्मादिपदार्थेषु गुणस्य वैधर्म्यत्वेन स्वीकृतत्वात् कर्मादिः गुणाश्रयो भवितुं नार्हति । एकत्व-द्वित्वादिसंख्यायाः गुणत्वे तु एकं रूपं द्वौ रसौ इत्येवं रूपरसादिनिष्ठायाः एकत्वद्वित्वादेः यथार्थप्रतीतिः न स्यात् । एकत्वादेः गुणपदार्थत्वे न गुणे गुणवृत्तिः इति प्राचीनसिद्धान्तः व्याहतः स्यात् । अतः एकः रूपः, द्वौ रसौ इत्यादिप्रतीतेः प्रमात्वरक्षानुरोधेन एकत्व-द्वित्वादिसंख्या स्वतन्त्रपदार्थत्वेन स्वीकर्तव्या। संख्यायाः स्वातन्त्र्यात् साक्षात् समवायसम्बन्धेन घटत्वादिषु एकत्वादिसंख्यायाः सत्त्वात् एकं घटत्वम् एकं रूपत्वम् इत्यादिप्रतीतिः निर्बाधं स्यात् ।

**स्वत्वम्**

न्यायवैशेषिकमते चैत्रस्य धनम्, धनी चैत्रः इत्यादिषु प्रतीयमानं यत् स्वत्वं स्वामित्वं वा तत् द्रव्यादिपदार्थेभ्यः न भिन्नम्, अपि तु स्वरूपसम्बन्धविशेषः। चैत्रस्य धनम् इत्यत्र षष्ठीविभक्तेरर्थः स्वत्वरूपः सम्बन्धः। स तु धनस्वरूप एव। धनी चैत्रः इत्यादौ प्रतीयमानः स्वामित्वरूपः सम्बन्धः चैत्रादिस्वरूप एव। स्वामित्व-स्वत्वयोः निरूप्यनिरूपकभावः सम्बन्धः स्वीक्रियते।

उक्तं प्राचीनमतं निराकृत्य स्वत्वपदार्थं प्रतिपादयितुं रघुनाथशिरोमणिना उक्तं यत् स्वत्वं हि स्वतन्त्रः पदार्थः, न तु स्वरूपसम्बन्धः विशेषः। प्राचीनाः पुनः वदन्ति यत् चैत्रस्य इदं धनम् इत्यत्र धनवृत्तिचैत्रनिरूपितस्वत्वरूपः सम्बन्धः न अतिरिक्तः पदार्थः। परन्तु इच्छारूपं विनियोगयोग्यत्वमेव स्वत्वपदार्थः। प्राचीनानां मतमिदं समालोच्य रघुनाथशिरोमणिना प्रतिप्रश्नः कृतः ननु कोऽयं विनियोगपदार्थः इति। अस्योत्तरे प्राचीना वदन्ति यत् भोजनविक्रयादयो हि विनियोगपदार्थाः। एवं सति परकीयान्नादौ अपि भोक्तृपुरुषस्वत्वप्रसक्तिः स्यात् । प्रत्युत्तरे प्राचीनाः पुनः वदन्ति यत् शास्त्रनिषिद्धत्वात् न हि तादृशविनियोगयोग्यत्वं स्वत्वम् । अत्रापि रघुनाथेन प्रश्नः उत्थापितः किमिदं शास्त्रमिति। प्रत्युत्तरे प्राचीना यदि वदन्ति यत् परस्वं नाददीत अर्थात् परकीयसत्त्वविशिष्टस्य कस्यचिद् वस्तुनः ग्रहणं निषिद्धमिति। तेन यावन्न स्वत्वज्ञानं तावत् परकीयसत्वाश्रयस्य अन्नादेः न ग्रहणम् । अतः सत्वम् स्वतन्त्रः पदार्थः इति स्वीकर्त्तव्यः। परस्वं नाददीत इति शास्त्रमेव स्वत्त्वस्य स्वातन्त्र्ये प्रमाणम्। प्रतिग्रह-उपादान (काशकुसुमादीनां संग्रहः)- क्रय-पितृमरणादीनि स्वत्त्वोत्पत्तेः कारणानि। दानविक्रयादिना स्वत्वस्य नाशो भवति। रघुनाथशिरोमणिना उक्तं कारणसमुदायनिष्ठैकशक्तिमत्त्वप्रयुक्तानां कार्यसमुदायनिष्ठ-वैजात्यप्रयुक्तानां स्वत्वपदार्थ-प्रतिग्रहादीनां कार्यकारणभावो निर्बाधं स्यात् ।

**वैशिष्ट्यम्**

भूतलादौ घटाभावादिप्रतीतेः विषयत्वेन प्रतीयमानयोः भूतल-घटाभावयोः एकः सम्बन्धः अवश्यमेव स्वीकर्त्तव्यः, सम्बन्धं विना भूतलादिरूपे अनुयोगिनि

घटाभावादिरूपस्य प्रतियोगिनः विशिष्टबुद्धिः न स्यात् । तस्मादेव यत्र विशेष्यविशेषण-भावमवलम्ब्य कापि प्रतीतिः स्यात् तत्र यथा विशेष्यं विशेषणं च विषयौ भवतः तद्वत् तदुभयोः सम्बन्धोऽपि प्रतीतिविषयः स्यात् । अतः भूतल-घटाभावयोः एकः सम्बन्धः अवश्यमेव स्वीकर्तव्यः । प्राचीनाः वदन्ति यत् अभाव-अनुयोगिनो सम्बन्धो हि स्वरूपसम्बन्धः। अयं स्वरूपसम्बन्धोऽपि भूतलादिस्वरूपः, न तु अतिरिक्तः। प्राचीनमते एतादृश स्वरूपसम्बन्ध एव अभावस्य अनुयोगिनिष्ठसम्बन्धत्वेन स्वीक्रियते।

प्राचीनानां मतमिदं खण्डयता रघुनाथशिरोमणिना उक्तं यत् घटाभाववद् भूतलम् इत्याद्यभावप्रतीतेः नियामकत्वेन वैशिष्टरूपः सम्बन्धः न स्वरूपसम्बन्धविशेषः। अर्थात् भूतलादिः न अनुयोगिस्वरूपः। परन्तु यथा रूपवान् घटः इत्यादिप्रतीतेः विषयत्वेन अतिरिक्तः समवायसम्बन्धः स्वीक्रियते तथैव घटाभाववद्भूतलम् इत्याद्यभावप्रतीतेः नियामकत्वेन प्रतीयमानः वैशिष्ट्यरूपः सम्बन्धोऽपि अतिरिक्तः पदार्थः।

अभावप्रकारकप्रतीतेः नियामकत्वेन वैशिष्ट्यरूपः सम्बन्धः स्वरूपसम्बन्धः चेत् स्वीकरणीयः तर्हि समवायस्य उच्छेदः स्यात् । तत्रापि स्वरूपसम्बन्धविशेषस्य निमित्ततायाः सुवचत्वात् ।

**विषयताः**

प्राचीनैः ज्ञानेच्छादीनां विषयता स्वरूपसम्बन्धविशेषरूपत्वेन स्वीकृता। विषयेऽपि रघुनाथशिरोमणिनोक्तं यत् विषयतायाः ज्ञानस्वरूपत्वे घटपटौ इत्येदौ समूहालम्बनज्ञाने भ्रमत्वप्रसक्तिः स्यात् । कारणं प्रोक्ते ज्ञाने घटविषयतापि ज्ञानस्वरूपा, पटविषयतापि ज्ञानस्वरूपा। पटविषयतात्वेन पटविषयतायां घटत्वाभावः अस्ति। किञ्च, तस्या विषयतायाः ज्ञानस्वरूपत्वात् घटविषयत्वमपि सङ्गच्छते। अतः घटाभाववद्वृत्तिः इत्यत्र घटत्वावच्छिन्नविषयतानिरूपकत्वस्य तस्मिन् ज्ञाने सत्त्वात् तादृशप्रतियोगित्वरूपा भ्रमत्वापत्तिः विषयतायाः विषयस्वरूपत्वे सति स्वीकृते घटभूतलसंयोगाः इति समूहावलम्बनज्ञानेन घटवद्भूतलम् इति विशिष्टबुद्धेः अभिन्नतानिबन्धनं वैलक्ष्यण्यं न स्यात् ।

विषयेस्मिन् प्राचीना वदन्ति यत् विशिष्टबुद्धौ संयोगादिसम्बन्धोऽपि भासते। समूहालम्बनज्ञानात् वैशिष्ट्यबुद्धेः वैलक्ष्यण्यं स्वीकरणीयम् । परन्तु नवीनानां नये नेदं समीचीनमिति, तन्मते संसर्गस्य संसर्गं विषयीकृत्य अपि समूहावलम्बनज्ञानं भवति। उक्तेन समूहावलम्बनज्ञानेन संयोगेन घटवद्भूतलम् इति ज्ञानस्य समानविषयकत्वनिबन्धन-विभिन्नता न स्यात् । अतः ज्ञानादिविषयता अतिरिक्तपदार्थत्वेन स्वीकर्त्तव्या। रघुनाथशिरोमणिना ज्ञानादिविषयतापदघटितादिपदेन इच्छाकृत्यादेर्ग्रहणम्। किञ्च, विषयतादिपघटितादिपदेन विषयित्वप्रतियोगित्वानुयोगितावधित्वा-वधिमत्वाधारत्वाधेयत्व दैशिकविशेषणता-कालिक-विशेषणताविशेष्यत्व-अवच्छेदकत्व-अवच्छेद्यत्वादयोऽपि

अतिरिक्तपदार्थत्वेन स्वीकृताः।

**पादटीका**

1. न्यायसूत्रम् , 1/1/1, पृ. 18
2. प्रशस्तपादभाष्यम् , सूत्रम् 2, पृ. 39
3. पदार्थतत्त्वनिरूपणम् , पृ. 59
4. न तत्र दृष्टमेव स्वरूपकारणम् । यदि दृष्टं कारणं तस्याजनकावस्थातो विलक्षणत्वाभावात्कार्यानुदयप्रसङ्गात्। - प्रकरणपचिका, पृ. 218
5. तस्या कार्यानुत्पत्तौ द्वयी गतिरभिनवो विनाशो वा। - प्रकरणपंचिका, पृ. 21
6. उक्तपदार्थेष्वन्तर्भूतत्वात् । तथाहि न तावत् द्रव्यात्मिका शक्तिः, गुणादिवृत्तित्वात् । अत एव न गुणात्मिका कर्मात्मिका वा। न च सामान्यान्यतमरूपा, उत्पत्तिमत्त्वे सति विनाशित्वादिति। - दिनकरी, पृ. 5
7. तृणारणिमण्यादिस्थले जातित्रयकल्पनामपेक्ष्य तत्तत्सम्बन्धानामेकशक्तिमत्वेन कारणत्वकल्पनाया एव लघुत्वेन न्याय्यत्वात् । - पदार्थतत्वनिरूपणम् , पृ. 66
8. सम्बन्धत्रितयनिष्ठैकजात्यङ्गीकारे च नोदनत्वादीनां जातिसङ्करप्रसङ्गः। यदि चान्वयव्यतिरेकाभ्यां तृणादेरपि कारणत्वमिष्यते तदा तेषामप्येकशक्तिमत्त्वेन तदस्तु तथापि जातित्रयकल्पनापेक्ष्य शक्तिद्वयकल्पनेनैव लाघवेन ज्यायसीति। तेष्वपि चैकजात्यङ्गीकारे मणित्वादिना सङ्करप्रसङ्गः। - प.त.नि., पृ. 38
9. तर्कसंग्रहः, पृ. 33
10. अन्यथासिद्ध्यनिरूपकत्वे सति कारणव्याप्यत्वं कार्यत्वम् ।
11. पदार्थतत्वनिरूपणम् , पृ. 66-67
12. तदेव, पृ. 67
13. रूपसगन्धस्पर्शाः संख्यापरिमाणादिपृथकत्वं संयोविभागादिपरत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणः। - वै.सू. अ. 1 आ.1, सू. 6

**सन्दर्भग्रन्थसूची**


1. अन्नंभट्टः, तर्कसंग्रहः, तर्कसंग्रहदीपिका-नीलकण्ठी-भास्करोदयसहितः, सम्पा. मुकुन्द-झा, निर्णयसागरः, बम्बई, 1933
2. उदयनाचार्यः, किरणावली (प्रथमखण्डः), सम्पा. गौरिनाथशास्त्री, पश्चिमबङ्ग-राज्य-पुस्तक-परिषद्, कलिकाता, 1991
3. केशवमिश्रः, तर्कभाषा, श्रीगङ्गाधरकरकन्यायाचार्यकृत-बङ्गानुवाद-विवृतिहिता, (प्रथमः द्वितीयश्च खण्डः), यादवपुरविश्वविद्यालयः, महाबोधि-बुक्-एजेन्सी च, कलिकाता, 2008
4. गोस्वामी, श्रीनारायणः, वैशेषिकसूत्रम्, शङ्करमिश्रकृतोपस्कार-टीकासहितं चुम्बिराजशास्त्री-विरचितप्रकाशिकाविवृतिसहितम्, चौखाम्बा-संस्कृत-सीरिज्-ऑफिस्, वाराणसी , 1969

5. झा, पण्डितः दुर्गाधरः, पदार्थधर्मसंग्रहः, प्रशस्तपादाचार्यविरचित-प्रशस्तपादभाष्यसहितः, वाराणसी 1917
6. प्रशस्तदेवः, पदार्थधर्मसंग्रहः, आचार्यढुण्ढिराजशास्त्रिविरचित-हिन्दीव्याख्यासहितः, चौखम्बा-संस्कृत-सीरिज् , वाराणसी-9, 1966
7. रघुनाथशिरोमणिः, पदार्थत्त्वनिरूपणम्, बङ्गानुवाद-व्याख्यासहितम्, रघुदेवकृतप.त.नि. टीकासहितम्, सम्पा. मधुसूदनभट्टाचार्यन्यायाचार्यः, संस्कृतकालेज्, कलिकाता, 1976
8. विश्वनाथन्यायपञ्चाननः, न्यायमुक्तावली, दिनकरी (प्रकाशः)-टीकासहिता, रामरुद्री (तरङ्गिनी)-टीकासहिता, सम्पा. पण्डित-हरिरामशुक्ला-शास्त्री, चौखम्बा-प्रकाशनम् , वाराणसी, 2015
9. विश्वनाथतर्कपञ्चाननः, भाषापरिच्छेदः, मुक्तावलीसहितः, श्रीमत्पञ्चाननभट्टाचार्यकृत-मुक्तावलीसंग्रहटीकासहितः विवृतिसहितश्च, संस्कृत-पुस्तक-भण्डारः, कलिकाता, 1377 बङ्गाब्दः
10. शिवादित्यमिश्रः, सप्तपदार्थी, सम्पा. जेट्टिल, ड.जे.एस् , लालभाइ-दलपतभाइ-भारतीय-संस्कृत-विद्यामन्दिरः, आमेदावादः-9

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# अष्टाध्याय्याः अधिकारेण सह कातन्त्रव्याकरणस्य अधिकाराणां तुलनात्मकमालोचनम्

**उदयशंकरखाटुया***

**सारः -** प्राचीनपरम्परानुसारं स्वल्पाक्षरता हि सूत्राणामन्यतमं वैशिष्ट्यम् । विनैव अर्थपरिवर्तनं पदैः वर्णैः वा सूत्राणां संक्षेपीकरणे वैयाकरणैः अवलम्बितेष्वुपायेषु अधिकारोऽन्यतमः। अतः अधिकारसूत्राणां सम्यगनुशीलनं विना तदधिकृतसूत्रार्थानुधावनमसम्भवम् एव। वस्तुतः अधिकारो अनुवृत्तिश्चेति अष्टाध्याय्याः द्वौ पादौ, ययोरुपरि समग्रा अष्टाध्यायी दण्डायमाना अस्ति। पदानां पुनरावृत्तिवारणपूर्वकं सूत्रसंक्षेपीकरणे सूत्रार्थावबोधने, विषयस्य विषयान्तरेभ्यः पृथकीकरणे च अधिकाराणां भूमिका अपरिमेया।

पााणिनिपरवर्तिसमयेऽपि व्याकरणनिर्माणधारा प्रवहन्ती आसीत् । समग्रभारते प्रायः द्वादशसंख्यकाः व्याकरणग्रन्थाः विरचिता बभूवुः। तेषु द्वादशव्याकरणेषु कातन्त्रव्याकरणमेनं शोधपत्रविषयत्वेन चितम् । तत्र प्राप्तानाम् अधिकाराणाम् आलोचनम् अग्रे करिष्यामि। किञ्च, पाणिनिव्याकरणोक्तैरधिकारैः सह तुलनात्मकमध्ययनमपि विधीयते।

**कूटशब्दाः** अधिकारलक्षणम्, अधिकारसूत्रपरिज्ञानोपायः, कातन्त्रेऽधिकारः , पाणिनिकातन्त्रयोः तुलना ।

**कातन्त्रव्याकरणे अधिकारलक्षणम्**

कातन्त्रव्याकरणेऽपि सूत्राणां षाड्विध्यं परिलक्ष्यते। तत्र अधिकार-सूत्राणां वैशिष्ट्यमादाय वैयाकरणैः अधिकारसूत्रलक्षणं निरूपितं - **स्वदेशे लक्ष्यसंस्कारकवाक्यार्थबोधाजनकत्वे सति विधिशास्त्रैकवाक्यतापन्नलक्ष्य-संस्कारकवाक्यार्थ-बोधजनकत्वमधिकारसूत्रत्वम् ।** इति। कातन्त्रव्याकरणस्य **सिद्धो वर्णसमाम्नायः** इति सूत्रस्य व्याख्यसारटीकायामुक्तम् -....अधिकारोऽपि न घटते यत् स्वस्मिन्

*असिस्टेंट प्रोफेसर, नयाग्रामः, पं. रघुनाथमुर्मूगवर्नमेंटकॉलेज, झाड्ग्रामः, पश्चिमबङ्गम्

स्वस्मिन् सूत्रे फलशून्यत्वे सति वक्ष्यमाणसूत्रे फलसम्बम् अधिकारत्वम्...[1] इति। एवं कातन्त्रव्याकरणे **धातोः** (4.2.1) इति सूत्रस्य शिष्यहितन्यासटीकायां सूत्रस्यास्य अधिकारत्वहेतुं निर्देशयन्नुक्तम् - **अधिकारोऽयम् । विधेयस्यानिर्देशात्, साकाङ्क्षत्वे सति पारार्थ्यादिति भावः।** इति अनया उक्त्यापि अधिकारस्य लक्षणमवगम्यते। अर्थात् अधिकारसूत्राणि स्वदेशे लक्ष्योपकारकाणि न भवन्ति। परन्तु विधिसूत्रैः एकवाक्यतापन्नं सत् लक्ष्यानां संस्कारकपूर्वकं चोपकरोति। तस्मात् कातन्त्रव्याकरणस्य द्विर्वचनमभ्यासस्य (3.3.1) इति सूत्रस्य शिष्यहितन्यासटीकायामुक्तम् - **...तत्रैवोपस्थितस्य सतोऽस्य विशिष्टवाक्यार्थरचनायामपेक्षाविनिवृत्तेः** इति। कलापस्य बिल्वेश्वरटीकायाम् उक्तं - **वक्ष्यमानार्थसंक्षेपाय कार्यिकार्यनिमित्तानां यदुदीरणं सोऽधिकारः। तथा च कार्यिकार्यनिमित्तानां पदानां यदुदीरणम् । वक्ष्यमानार्थसंक्षेपादधिकारः उच्यते**[2] इति । वस्तुतः सूत्रेषु कार्यी कार्यं निमित्तं चेति त्रयाणां पदानां सन्निवेशो भवति - **कार्यी कार्यं निमित्तञ्च त्रिभिः सूत्रमुदाहृतम् ।** इति। न तु सर्वाण्येव सूत्राणि आवश्यकतया त्रिभिरेव पदैः निर्मितानि स्युः। कदाचिद् एतेषु द्वाभ्यामेव पदाभ्यां सूत्रं निर्मीयते - **कदाचित् कार्यिकार्याभ्यां क्वचित् कार्यनिमित्ततः।** इति। एषु एकस्य असन्निधानेन असम्पूर्णसूत्रस्य सम्पुष्टीकरणाय आकाङ्क्षावशात् पूर्वसूत्रात् पदानामनुवृत्तिः कर्त्तव्या । तथाह्युक्तम् - **आकाङ्क्षायान्तु सर्वेषामनुवृत्तिः परे भवेत् ।**[3] इति।

**कातन्त्रव्याकरणे अधिकारसूत्रपरिज्ञानोपायः**

आदौ एव ज्ञातव्यं यत् पाणिनौ यथा अधिकारसूत्रपरिज्ञानोपायरूपेण **स्वरितेनाधिकारः** इति पृथक् सूत्रं पाणिनिना निर्मितम् कातन्त्रे तादृशं किमपि सूत्रं न विद्यते। नापि कोऽपि उपायो निर्दिष्टः। तर्हि को योगः अधिकार इति विषये ज्ञानार्जनाय कातन्त्रीयव्याख्याकर्तारः शरणम् । वस्तुतः विना पाणिनिव्याकरणज्ञानं कातन्त्रज्ञानमसम्पूर्णमेव स्यात् । अतः कातन्त्रव्याकरणस्य शिष्यहितन्यासे पस्पसायामुक्तम् - **चतुः सहस्रात्मकस्य पाणिनिव्याकरणस्य चतुर्दशात्मकेषु सूत्रेषु प्रपञ्चनमेव कातन्त्रतास्य व्याकरणस्य इति।** अष्टाध्याय्यां स्वरितस्वरयुतानां यथा अधिकारत्वनिर्देशात् अधिकारसूत्रज्ञानं विदुषां सुकरम्। परन्तु कातन्त्रव्याकरणे सूत्रेषु स्वरा एव नास्ति तस्मात् स्वरज्ञानपूर्वकम् अधिकारसूत्रज्ञानप्रसङ्गो नास्ति। अधिकारसूत्राणि तु सन्त्येव । तानि क्वचित् अष्टाध्यायी पठनजनितया अभिज्ञतया, पाणिनिसूत्रेण सादृश्यदर्शनात्, सूत्राणां विधिसूत्रोपकारिकत्व-दर्शनज्ञानेन, स्वोद्देशे फलशून्यतादर्शनेन, स्वरूपदर्शनेन, वृत्तिकारणां व्याख्याकाराणाञ्च वचनादेव ज्ञायन्ते। तद्यथा **सपरस्वरायाः सम्प्रसारणमन्तस्थायाः** (3.4.1) इति सूत्रस्य शिष्यहितन्यासे उक्तम् - **परिभाषेयं नाधिकारः। अधिकारे ह्यस्मिन् प्रस्त्येः सम्प्रसारणमन्तस्थायास्सपरस्स्वरायास्स्थाने न स्यात्।** इति। यद्यपि अधिकारसूत्राणामाधिक्यमत्र नालक्ष्यते तथापि यानि सन्ति तेषाम् अधिकारत्वं दुर्गसिंहेन वृत्तौ उल्लेखः कृतः। तद्यथा काले इति सूत्रस्य वृत्तौ **काले इति अधिकृतं वेदितव्यम्** इति। एवं

**स्वरादेर्द्वितीयस्य** (का-3.3.2) इत्यत्रापि....**इति अधिकृतं वेदितव्यम्** इत्युक्तिः दृश्यते। परन्तु कियद्दूरं सोऽधिकारो गच्छति इति न ज्ञायते। वस्तुतः पाणिनिना केषुचित् अधिकारसूत्रेषु प्राग् -आ-इत्याद्युपसर्गयोगेन अधिकारावधिर्निर्दिष्टा परन्तु कातन्त्रे तादृशमेकपि अधिकारसूत्रं नास्ति येन तस्य व्याप्तिविज्ञानं सुकरं स्यात् । तस्मात् कातन्त्रीयाधिकाराणाम् अवधिज्ञानाय उत्तरत्र सूत्राणामर्थानुसन्धानं विषयानुसन्धानञ्च कर्त्तव्यम् ।

**पाणिनिव्याकरणे विराजमाना ये मुख्या अधिकाराः तैः सह कान्तत्रीयाधिकाराणां तुलनात्मकमालोचनम्**

अष्टाध्याय्यां **कारके** इति अधिकारसूत्रेण ***कारकाधिकारः*** आरभ्यते। अनेन अधिकारेण सर्वाण्येव कारकाणि विषयीकृतानि। परन्तु कातन्त्रे तादृशम् अधिकारसूत्रं नास्ति। तत्र कारकविषयः नामचतुष्टयाध्यायस्य चतुर्थपादे आलोचितः। स च पादः कारकपादः इति आख्यापितः।

अष्टाध्याय्यां विद्यमानेषु मुख्येषु अधिकारेषु ***समासाधिकारोऽन्यतमः***। **प्राक्कडारात्समासः 2.1.4 इति** सूत्रेण समासाधिकारस्य आरम्भो भवति। सूत्रस्यास्य व्याप्तिरपि सूत्रे एव प्राक्पदसहयोगेन नियमिता अस्ति। कातन्त्रव्याकरणे द्वितीयेऽध्याये नामचतुष्टयनामधेये पञ्चमे पादे समासाः आलोचिताः। समासचर्चा एव अस्य पादस्य विषयतया समासपाद इति पादस्यास्य ख्यातिः। नाम्नां समासो युक्तार्थः इति संज्ञासूत्रेण समासपादारम्भः। समाससूत्राणां शिरोनामत्वेन नास्ति पाणिनिवत् किमपि अधिकारसूत्रम् ।

अष्टाध्याय्यां विद्यमानेषु ***प्रत्ययाधिकारो*** हि महत्तमः अधिकारः। तृतीयाध्यायस्य प्रथमं हि सूत्रं **प्रत्ययः** इति। इदम् अधिकारसूत्रम् , स्वरितयुतत्वात् । तृतीय-चतुर्थ-पञ्चमाध्यायेषु अस्य व्याप्तिः वर्तते। प्रत्ययः, परश्च, आद्युदात्तश्च, अनुदात्तौ सुप्पितौ इति सूत्रचतुष्टयं समुदायेन प्रत्ययाधिकारं निरूपयति। अस्मिन् प्रत्ययाधिकारे सन् इत्यादितः कप् इत्यन्तं यावत् पञ्चशताधिकाः प्रत्ययाः पठिताः सन्तिः।

कातन्त्रव्याकरणे तृतीये आख्याताध्याये द्वितीयपादे प्रत्यया आलोचिताः। तस्मादस्य पादस्य प्रत्ययपाद इत्यभिधा। तत्र प्रथमः योगः **प्रत्ययः परश्च ( 3.2.1 )** इति। अष्टाध्याय्या योगद्वयमत्रपादारम्भे एकीभूय पठितं शर्ववर्मणा। अयं योगः अधिकारः परिभाषा वेति विषये दुर्गसिंहेनोक्तं - **अनियमे प्राप्ते परिभाषेयं विध्यङ्गशेषभूता वा** इति। एतेन अस्य परिभाषात्वमेव स्पष्टम् ।

अष्टाध्याय्यां प्रत्ययाधिकारे एव **तद्धिताः** इति ***तद्धिताधिकारः*** पठितः। पञ्चमाध्यायपरिसमाप्तिं यावत् पठिता प्रत्यया तद्धितप्रत्ययाः। तत्र साकल्येन 281 प्रत्ययाः पठिताः सन्ति। अयं तद्धिताधिकारः पञ्चधा विभक्तुं शक्यते - 1. प्राग्दिव्यतीयः अणाधिकारः 2. प्राग्वहतीयः ठगाधिकारः 3. प्राग्घितीयः यदधिकारः 4. प्राक्क्रीतीयः छाधिकारः 5. प्राग्वतीयः ठञधिकारश्च। एते अधिकाराः पृथक् पृथग् अधिकारसूत्रेण आरभ्यते।

कालापानां विषये तु जनश्रुतिरस्ति यत् - **कालापास्तद्धिते मूढाः** इति। वस्तुतः कातन्त्रे तद्धितांशः अतीव संक्षिप्तः।

अष्टाध्याय्यां प्रत्ययाधिकारे **स्त्र्यधिकारो स्त्रियाम्** इति सूत्रेण आरभ्यते। कातन्त्रव्याकरणे तु नामचतुष्टाख्यस्य द्वितीयाध्यायस्य सप्तमपादे स्त्रीप्रत्ययाः पठ्यन्ते। तस्मादयं स्त्रीप्रत्ययपादः उच्यते। स्त्रीप्रत्ययपादस्य प्रथमे एव **शर्ववर्मणा स्त्रियाम्** (2.7.1) इति अधिकारसूत्रम् पठितम् । अष्टाध्यायीस्थं स्त्र्यधिकारसूत्रं कातन्त्रीयस्त्र्यधिकारसूत्रं च शब्दतः वर्णतश्च सादृश्यमेव भजते। अष्टाध्याय्यां प्रत्ययाधिकारे धात्वधिकारः **धातोः** इति सूत्रेण निर्दिष्टः। कातन्त्रेऽपि **धातोः** (4.2.1) इति अधिकारसूत्रत्वेन पठितः।

कालाधिकारे तु कातन्त्रव्याकरणम् अष्टाध्यायीतः स्वतन्त्रम्। कातन्त्रे आख्याताध्यायस्य प्रथमे पादे काले इति अधिकारसूत्रं विराजते। अस्य सूत्रस्य वृत्तौ दुर्गसिंहेनोक्तं - काल **इति सप्तम्यन्तमनुकृतम् । काल इति अधिकृतं वेदितव्यम् ।** इति। अष्टाध्याय्यां कालात् (5.1.78) इति कालाधिकारोऽस्ति। यस्मिन् अर्थे अयम् अधिकारः पठितः कातन्त्रे तस्मिन्नर्थे कालाधिकारो नास्ति।

अष्टाध्याय्यां भावे (3.3.18) इति अधिकारसूत्रं दृश्यते। इतः परं विद्यमानैः सूत्रैः विहितानि कार्याणि भावे एव भवति। **कातन्त्रे** अपि भावे (4.5.9) इति सूत्रं वर्तते। यद्यपि अस्य सूत्रस्य अधिकारत्वविषये वृत्तिकृद्भिः व्याख्याकारैश्च किमपि नोक्तम् । तथापि अस्य उत्तरत्र योगेषु अनुवर्तनदर्शनात्, स्वदेशे फलशून्यतादर्शनात्, पाणिनिना सादृश्यदर्शनाच्च अधिकारत्वमेवास्ति इति निश्चयः।

**कातन्त्रव्याकरणे अनुवृत्तिः**

कातन्त्रव्याकरणे पूर्वतनसूत्रात् पदानाम् उत्तरत्र सूत्रेषु अनुवृत्तिर्दृश्यते। सूत्रार्थसम्पुष्टीकरणे अनुवृत्तेः महती भूमिका दृश्यते। अधिकारस्य अनुवृत्तेः च भेदो वर्तते। **पदस्य पुनरावृत्तिं निवारयितुमेव अनुवृत्तिपन्था उपकारिणी। अपरतः अधिकारस्तु एकस्यैव विषयस्य शिरोनाम। तद्यथा अष्टाध्याय्यां कारकाधिकारे केवलं कारकमेव विषयत्वेन अधिक्रियते। एवं प्रत्ययाधिकारे प्रत्यया एव विषयीभूता। एकस्मिन् मुख्ये अधिकारे अनेके गौणा अधिकारा अपि भवितुमर्हति। तद्यथा प्रत्ययाधिकारे स्त्र्यधिकारः कृदधिकारः तद्धिताधिकार इत्यादयः। अनुवृत्तिस्तु यस्य कस्यापि सूत्रस्थपदस्य पदानां वा उत्तरवर्तिसूत्रेषु प्रयोजनमुद्दिश्य भवति।** अतः उभयोरस्ति महान् भेदः। परन्तु कातन्त्रे अनुवृत्त्यधिकारयोः भेदः स्पष्टतया नोपलभ्यते। अनुवृत्तिरपि अधिकारनाम्ना कातन्त्रनिकाये प्रसिद्धः। तद्यथा **त्यदादीनाम विभक्तौ** (2.3.29) इति पदस्य उत्तरवर्त्तिसूत्रेषु अनुवर्तनं दृश्यते । तस्य च (2.3.33) इति सूत्रस्य कविराजटीकायां पञ्जीटीकायां च यथाक्रमं **ननु किमर्थमिदं विभक्तावित्यधिकृत्य सिर्विशिष्यते...तत् किं विभक्त्यधिकारेण...** इत्यादिवचनेषु विभक्तधिकारस्य उल्लेखः विहितः। यद्यपि विभक्तिपरत्वमादायैव त्यदादिगणपठितशब्दानां अकारविधानेन विषयसादृश्यसंरचनात् विभक्तौ इत्येवम् अधिकारसूत्रेण इष्टसिद्धिः सम्भवा आसीत् तथापि अधिकारत्वेन अस्य पाठः न विहितः। अतः अनुवृत्त्या एव कार्यसिद्धिर्विहिता। परन्तु टीकाकृद्भिः बहुत्र **विभक्त्यधिकार** इति उच्चरितम् । एतेन अनुवृत्तेः अधिकारस्य च अभिन्नता प्रतीयते।

कातन्त्रेऽपि अनुवृत्तेः ज्ञापकतया चकारस्य प्रयोगो दृश्यते। चयोगेन अनुवृत्ते उदाहरणानि यथा - **एकारे ऐ ऐकारे च** (1.2.6) इति सूत्रे चकारेण **समानः सवर्णे दीर्घीभवति परश्च लोपम्** (1.2.1) इति सूत्रात् लोपपदमाकृष्यते। चादियोगे च, अन्यतोऽपि च इत्यादीनि। **इन्हन्पूषार्यम्णां शौ सौ च** इति सूत्रस्य चकारेण अनुवृत्तेर्ज्ञापकत्वमुक्तं शिष्यहितन्यसासटीकायां- **...चकारात्तदनुवृत्तिर्भवतीति चेत् ...**। एवं **निर्धारणे** च इति सूत्रे चकारस्य अनुवृत्तिज्ञापकत्वं कथितम्। शिष्यहितन्यासवृत्तौ - **ननु पूर्वत्र चानुकृष्टा सप्तमी चानुकृष्टं चोत्तरत्र नानुवर्तते तत्कथं सप्तम्या इहानुवृत्तिः स्यात् । सत्यम् । चकारकरणाद् भविष्यति।** इति।

कस्य सूत्रस्य कियद्दूरं यावत् अनुवृत्तिः भवति इति विषयो व्याख्यभिन्नोपायेतरागम्यः तथापि क्वचित् अनुवृत्तेः निवृत्त्यर्थं सूत्रेषु शर्ववर्मणा पदविशेषसन्निवेशेन इङ्गितम् । तद्यथा **तृतीयादौ तु परादिः** इति सूत्रे तु ग्रहणेन तृतीयादौ पदस्य उत्तरत्रानुवृत्तिवार्यते। तदुक्तं शिष्यहितन्यासे - **ननूत्ररत्र तृतीयादिग्रहणस्याननुवृत्तिद्योतनार्थस्तु शब्दः स्याद्** इति। क्वचित् अपिपदेनापि अनुवृत्तिविज्ञानं भवति। तत्र दिङ्मात्रमुदाहरणं यथा - **रप्रकृतिनामपरोऽपि** (1.5.14) इति सूत्रात् अपि पदस्य उत्तरत्र अनुवृत्तिः भवति। अतः **एष सपरो व्यञ्जने लोप्यः** (1.5.15) इति सूत्रस्य दुर्गसिंहवृत्तौ अप्यधिकार इति पदमुक्तम् । अत्रेदमपि लक्षणीयं यत् सूत्रवृत्तौ अधिकारशब्दः अनुवृत्तिबोधनार्थमेव प्रयुक्तम् । बहूनां सूत्राणां टीकासु अधिकारशब्दस्य अनुवृत्त्यर्थे एव प्रयोगो विहितः। यस्य शब्दस्यानुवृत्तिः क्रियते तं शब्दमादाय तस्याधिकारस्य नाम टीकाकारैः प्रदत्तः। यथा कुत्रचित् वानुवर्तते चेत् वाधिकार, क्वचित्[4] इति शब्दोऽनुवर्तनाद् क्वचिदधिकारः, अपिशब्दानुवर्तनेन अप्यधिकारः इत्येवम् ।

योगविभागेनापि अनेकत्र अनुवृत्तिर्दर्शिता। तथाहि **घुटि च** सूत्रे दुर्गसिंहेनोक्तं - **पृथक् योगः उत्तरार्थः**। इति व्येञश्च (4.1.42) इति सूत्रस्य शिष्यहितन्यासटीकायां उक्तम् - योगविभाग उत्तरार्थः। **काम्य च** (3.2.6) इति सूत्रस्य शिष्यहितन्यासटीकायामुक्तम् - **यिन्काम्यौ इति कर्त्तव्ये योगविभाग उत्तरार्थः यिनः एव अनुवृत्त्यर्थः।** इति। वस्तुतः नाम्नः आत्मेच्छायां यिन् (3.2.5) इति सूत्रस्थितस्य यिनः उत्तरत्र अनुवृत्त्यर्थं योगविभागः।

**अधिकारप्रकारः / अनुवृत्तिप्रकारः**

कातन्त्रीयसूत्राणामनुवृत्तेः चतुष्प्रकारता अष्टाध्याय्या सादृश्यं भजते। अत्रापि केषाञ्चन सूत्राणां गङ्गाप्रवाहवद् , केषाञ्चन मण्डूकप्लुतिरिव, केषाञ्चन सिंहावलोकितन्यायेन केषाञ्चन च गोयूथन्यायेन अनुवर्तनं भवति।

तथाहि **तौ रं स्वरे** (2.3.26) **इति सूत्रस्य** टीकायां[5] उक्तं - **अत्र मण्डूकप्लुत्या व्यवस्थितविभाषा**। वस्तुतः अस्मिन् सूत्रे **जरा जरस् स्वरे वा** इति व्यवहितसूत्रात् वा अनुवर्तते। एवं चेक्रीयितान्तात् (3.2.43), आय्यन्ताच्च, इन्व्यजादेरुभयम् इति युगपत् त्रिषु सूत्रेषु मण्डूकप्लुत्या **अण् विकरणः कर्तरि** (3.2.32) इति सूत्रात् कर्तरि इति पदस्य अनुवृत्तिः क्रियते।

गङ्गाप्रवाहाधिकारस्य तु बहूनि स्थलानि सुखं लभ्यते। तत्र दिङ्भात्रमुदाहरणं यथा - **युष्मदस्मदोः परं परात् षष्टचतुर्थीद्वितीयासु वस्नसौ** (2.3.1) इति सूत्राद् **युष्मदस्मदोः** इति पदस्य आत्वं व्यञ्जनादौ (2.3.18) इति सूत्रं यावत् विद्यमानेषु सर्वेषु सप्तदशसूत्रेषु अनुवर्तनं दृश्यते।

सिंहावलोकितन्यायोऽपि कातन्त्रे न दुर्लभः। तथद्या **उषविदजागृभ्यो वा** (3.2.20) इति परवर्तिसूत्राद् वा इति **आसिदय्यियिदरिद्राभ्यश्च**[6] (3.2.19) इति पूर्ववर्तिसूत्रे सिंहावलोकितन्यायेन अपकृष्यते।[7]

गोयूथाधिकारस्योदाहरणं यथा **रेफसोर्विजर्ननीयः** (2.3.63) इति सूत्रे **इसुस्दोषां घोषवति रः** (2.3.59) इत्यस्मात् घोषवतः, **अघोषे प्रथमः** (2.3.61) इति च सूत्रात् अघोषस्य अनुवृत्तिः। तथाह्युक्तम् - **ननु व्यवहितयोः घोषवदघोषयोः कथमनुवर्तनम् ? सत्यं गोयूथनामाधिकारः** इति।

**सन्दर्भाः**

1. कातन्त्रं, सन्धिचन्द्रिका, व्याख्यासारः 1.1.1
2. बिल्वेश्वरटीका-3.3.1
3. मुग्धबोधः, दुर्गादासटीका-संज्ञापादस्यान्तिमे
4. नस्य तु क्वचित् (2.6.44)
5. शिष्यहितन्यासः
6. दुर्गसिंहेन इदं सूत्रं नोल्लेखितम्
7. ...उषविदजागृभ्यो वेत्यतो वेति सम्बध्यते इति सिंहावलोकितन्यायेन। - शिष्यहितन्यासः

**सहायकग्रन्थनिर्देशः**

1. चतुर्वेदशर्मा गिरधर, वै.सि.कौ., मोतीलाल बनारसीदास, देहली, 2010 (प्रथमसंस्करणम् - 1961)
2. त्रिपाठीजयशंकरलालः,मालवीयः सुधारकश्च, काशिका, तारा बुक् एजेन्सी, वाराणसी, पुनर्मुद्रितसंस्करणम् - 2009
3. दीक्षितः पुष्पा, अष्टाध्यायीसूत्रपाठः, ज्ञानभारती पब्लिकेशन, देहली-2009
4. शास्त्री भार्गवः, महाभाष्यम् , चौखम्बा संस्कृतप्रतिष्ठानम् , देहली, पुनर्मुद्रितसंस्करणम् - 2011
5. हाल्दार् गुरुपदः, व्याकरण दर्शन का इतिहास, संस्कृत बुक डिपो, कलिकाता, पुनर्मुद्रित संस्करणम् - 2006, प्रथमप्रकाशः- 1360 (बङ्गब्दः)
6. भट्टाचार्यः श्रीमद्गुरुनाथविद्यानिधिः, कातन्त्रव्याकरणम् (पूर्वार्द्धम्), कलिकाता-निवेदितालेन स्थितसंस्कृतविद्यालयः, अष्टमसंस्करणम् - 1332 (बङ्गाब्दः)
7. द्विवेदीजानकीप्रसादः, कुमारसुरेन्द्रः, कातन्त्र तथा कच्चायन व्याकरण का समीक्षात्मक अध्ययन, केन्द्रीय उच्च तिब्बती शिक्षा संस्थान, वाराणसी- 2004

**आङ्ग्लग्रन्थाः**


1. Satpathy R.K. Paniniyan and Katantra System of Grammar (A Comparative Study), Bhartiya Vidya Prakashan, Delhi, 1999 (First Edition)
2. Saini R.S., Post Paniniyan System of Sanskrit Grammar, Delhi, 2007
3. Chatterji Kshitish Chandra, Technical Terms and Technique of Sanskrit Grammar, Sanskrit Pustak Bhandar, Kolkata, 2003
4. Tripathi, Kriparama, Arrangement of Rules in Paninis Ashtadhyayi, Parimal Publication, Delhi, 2016
5. Saini Dr, R.S. Post-Paniniyan System of Sanskrit Grammar, Parimal Publication, Delhi, 2007
6. Parul Saxena, Kuldeep Pandey, Vinay Saxena Paninis' Grammar in Computer Science, Recent Research in Science and Technology 2011,3 (7) : 109-111 ISSN : 2076-5061

**Internet Source :** https://ashtadhyayi.com

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# महाकाव्यपुराणशास्त्रयोः वास्तुविमर्शः

**सोनाली***

**सारः -** प्रायः सर्वेषु महाकाव्य-पुराणेषु वास्तुविद्यायाः आचार्याः, वास्तुशैली, भवन-पुरादिनिवेशः, तालमानं, प्रतिमालक्षणं, लिङ्गलक्षणं, पीठिका, सभामण्डपम् , उद्यानम् , वापीकूपतडागादिविधिः, शैलमन्दिरम्, चित्रकला च वर्णितं दृश्यते । अनेन प्रकारेण महाकाव्य-पुराणानाञ्च अध्ययनेन वास्तुशास्त्रस्य समुन्नतपरम्पराविषये ज्ञायते।

**कूटशब्दाः -** महाकाव्यम्, मत्स्यपुराणम्, रामायणम्, अग्निपुराणम्, वास्तुशास्त्रम्, पुराणम् ।

वास्तुशास्त्रं व्यावहारिकं शास्त्रम् अस्ति। व्यावहारिकधरायां प्रत्येकं मनुष्यस्य सुख-समृद्धि-शान्तिप्राप्तये विशेषेच्छा भवति। भोजनवस्त्रनिवासानां व्यवस्था सर्वेषां कृते सुलभा भवेदिति राज्यस्य कल्याणाय एकः आदर्शसंकल्पो भवति। भारतीयजीवनपरम्परायां चतुर्विधाश्रमाः मानवजीवनस्य पूर्णतासिद्धयर्थं महत्त्वपूर्णाः भवन्ति। अपि च धर्म-अर्थ-काम-मोक्षपुरुषार्थानां प्राप्तिः मानवजीवनस्य लक्ष्यं वर्तते। एतेषां चतुर्विधाश्रमाणां पुरुषार्थानां कृते तथा चाश्रमिणां कृते सर्वप्रथमं वास्तोः आवश्यकता भवत्येव। मानवजीवनस्य कल्याणं वास्तोः प्रमुखम् उद्देश्यं वर्तते। प्राणिमात्रस्य कल्याणाय वेदाः यज्ञयागादिकार्थं प्रचोदयन्ति। अथर्ववेदस्योपवेदत्वेन स्थापत्यवेदः परिगण्यते। अतः इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं वेदयति यो सौ वेदः इत्युक्त्यनुसारं वेदस्य परमलक्ष्यमेव वास्तुशास्त्रस्यापि लक्ष्यम्। वास्तुशास्त्रं गृहनिर्माणसन्दर्भेऽस्माकं पथप्रदर्शकमस्ति। शास्त्रमिदम् आवासनिर्माणप्रविधीनां विषये

*शोधच्छात्रा, वास्तुशास्त्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली

चापि मार्गदर्शनं करोति। ऋग्वेदे वास्तोष्पत्तिसंज्ञकदेवस्य स्तुतौ कथितमस्ति यद् वयं सुखयुक्तं रमणीयम् ऐश्वर्ययुक्तञ्च स्थानं प्राप्नुयामः। अस्मान् सदैव कल्याणकारकः साधनोपकरणदो भवेदिति।[1]

भारतीयवास्तुशास्त्रं सर्वविधसुख-समृद्धि-शान्तिमय-सुविधापूर्णगृहस्य निर्माणयोजनां प्रस्तौति। **वसन्त्यस्मिन्निति वास्तुः** अर्थात् यत्र प्राणी निवसति तदेव तद् वास्तुः। अतः सामान्यार्थेषु निवासयोग्या भूमिः (भवनं) वास्तुः। शिल्पशास्त्रं स्थापत्यशास्त्रञ्च वास्तुशास्त्रस्येवाङ्गे स्तः।[2] वास्तुशब्दस्य निर्वचनं प्रस्तूयता भगवता यास्काचार्येणोक्तम् - **'वास्तुर्वस्तेनिवासकर्मणः'**[3] इति। वास्तुशब्दः **वस् निवासे** धातोः निष्पन्नो भवति। वास्तुशास्त्रशब्दस्य व्युत्पत्तिलभ्योऽर्थोऽस्ति यस्मिन् मनुष्याः निवसन्ति[4] इति। अतः निवासयोग्यं स्थानमिति वास्तु। एतदर्थं वसति शब्दरूपस्य प्रयोगः क्रियते। हिन्दीभाषायां **बस्ती** शब्दः अपि वस्तोः परिचायकः, परञ्च भेदवशात् ग्राम-नगरादिभ्यः अस्य शब्दस्य प्रयोगः क्रियते। पाणिनिमतानुसारेण **वस्-निवासे**[5] इत्यस्माद्धातोः **वसेस्तुन्वसेर्णिच्च**[6] इत्यनयोः सूत्रयोः वस् धातोः तुन् प्रत्यये कृते सति वस्तु शब्दो निष्पद्यते। वस् धातौ णिच् प्रत्यये कृते सति णित्वादुपधावृद्धिस्तेन वास् शब्दो निष्पन्नो भवति । वास् शब्दे च पुनः तुन् प्रत्यये कृते सति वास्तुशब्दो निष्पद्यते । वस्तुशब्दे च णित्वात् वास्तुरिति शब्दो निष्पद्यते। तस्य च वास्तोः दाता पालयिता वा वास्तोष्पति रिति वैदिकी देवविशेषः। अस्मिन् क्रमे वस् धातोः तुन् प्रत्यये उपधावृद्धौ च कृते वास्तुशब्दः निष्पद्यते।[7]

**मयमतग्रन्था**[8]नुसारेण प्रासादगृहभवनादीनि समस्तवास्तोः स्वरूपाणि। वास्तुपदानि आवासनिर्माणयोजनायाः तथा च आवासनिर्माणे विभिन्नस्थलेषु प्रयुज्यते।[9] वास्तुपदस्य अन्यः पर्यायः - स्थापत्यम्[10]। यद्यपि स्थापत्यशब्द ऋग्वेदे नोपलभ्यते किन्तु स्थापत्यस्य भावार्थसूचकशब्देषु स्थपयन्ति[11], सथापयसे[12], प्रतिस्थि[13], प्रतिस्था[14], प्रतिस्थाम्[15] इत्यादयः शब्दा उपलब्धाः सन्ति। वास्तुशास्त्रे वास्तोष्पतिशब्दः वास्तुपुरुषाय प्रयुज्यते तथैव स्थापत्येन स्थापतिशब्दः अपि उपलब्धः। पञ्चविंशब्राह्मणे स्थपतिशब्दः वास्तुपत्यर्थे प्राप्यते।[16] एतेषां सन्दर्भानामाधारे निवास-स्थापनायाः संरचनायाश्च शास्त्रं वास्तुशास्त्रमिति वक्तुं प्रभवामः।

अस्मिन् विश्वे भोजनवस्त्राणामावश्यकतायाः पूर्त्यनन्तरं निवासाय आवास-व्यवस्थायाः आवश्यकता भवति यतः आवासेन आतपशीतवर्षादिभ्यः रक्षणं भवति। धर्मार्थकामरूपपुरुषार्थसाधनाय अपि गृहस्यावश्यकता भवत्येव। गृहे प्राणी सुख-सौविध्यपूर्वकं विश्रामं करोति। अतः सर्वे प्राणिनः देवासुरादयः स्वस्थानविशेषे निवसन्ति। यथा वैकुण्ठे विष्णुः, कैलासे शिवः, स्वर्गे इन्द्रादयो देवाः, पाताले दानवाः, पृथिव्यां

वेश्मादिषु च मानवादयः, मानवनिर्मितगोष्ठादिषु गवाश्वादयो ग्राम्यपशवः, समुद्रनदीतडागादिषु जलचराः, वृक्षकोटरेषु नीडेषु वा खगाः, गुहासु गह्वरेषु च सिंह-व्याघ्रादयो वनचरजीवाः, बिलेषु मूषकसर्पपिपीलिकादयो जीवाः। तत्र धरणीमाश्रित्य वृक्षवनस्पत्यादयः तिष्ठन्ति, ये आवासप्रदाने न केवलं मनुष्याणाम् अपितु पशुखगादीनामपि महत्सहायकाः सन्ति। यतः प्राकृतिकावासरूपे कृत्रिमावासनिर्माणे च वृक्षाः अत्यन्तमहत्वपूर्णाः भवन्ति।

वैदिककालादेव अस्माकं महर्षिभिः मानवानां तस्याश्रितानाञ्च सुखाय कल्याणाय च कृत्रिमगृहस्य आवासरूपे अवधारणा कृता। तत्र सर्वप्राणिषु मानवस्योत्कृष्टत्वं सर्वविधज्ञानविज्ञानशीलत्वं सततपरिश्रमशीलत्वञ्चावलोक्य तेभ्य एव विशेषरूपेण वास्तुप्रयोजनं शास्त्रेषु निर्दिष्टम् ।[17]

वास्तुशास्त्रन्तु वेदाङ्गानां षडङ्गेषु मुख्यत्वेन परिकीर्तितस्य ज्योतिषशास्त्रस्य संहितास्कन्ध अपि परिगण्यते। परन्तु समराङ्गणसूत्रधारे वास्तुशास्त्रस्याङ्गत्वेन ज्योतिषं निगदितमस्ति। वस्तुतः अनयोः शास्त्रयोः परस्परं सम्बन्धः सुदृढ़ो वर्तते। अतः परस्परम् अङ्गाङ्गीरूपे अनयोः चर्चा प्राप्यते। तत्र वास्तुशास्त्रमनुसृत्येव गृहनिर्माणस्य विचारस्तु वैदिककालादेव भारतीयजनमानसे वर्तत एव।

प्राणी यत्र निवसति तदेव वास्तु। निवासयुक्तशुभभूमिरेव वास्तुसंज्ञाभिधीयते। कालान्तेरण भारतीयमनीषीभिः विषयेऽस्मिन् स्वविचाराः प्रदत्ताः। अर्थाद् यत्र प्राणिनः विशेषतया मानवाः निवसन्ति तदेव वास्तु। अस्मिन्प्रसङ्गे आचार्यविश्वकर्मा -

**देवतानां नराणाञ्च गजगोवाजिनामपि।**
**निवासभूमिशिल्पज्ञैर्वास्तु संज्ञमुदीरितम् ।।**[18]

अस्य मतानुसारेण न हि केवलं मानवानां गृहम् अपितु देवादीनां कृते देवालयस्य निर्माणमपि वास्तु इत्यभिधीयते। अस्मिन् क्रमे मानसारग्रन्थेऽपि उक्तम् ।[19] गृहनिर्माणे प्रयुक्तवस्तूनामपि वास्तुसंज्ञा दत्ता भारतीयमनीषिभिः।[20] कौटिल्येनापि अर्थशास्त्रे वास्तुशब्दस्य प्रयोगः कृतः - ''**गृहं क्षेत्रमारामः सेतुबन्धस्तटाकमाधारो वा वास्तुः**''[21] इति। कालक्रमेण वास्तुशब्दस्यार्थेऽपि परिवर्तनं दृश्यते। यथा अमरकोषे उपलभ्यते - '**वेश्मभूर्वास्तुरस्त्रियाम्**'।[22] अत्र वास्तुशब्दस्यार्थो न हि गृहविशेषोऽपि गृहनिर्माणयोग्या नियतभूमि एव वास्तुरिति । भारतवर्षे सांस्कृतिकपरम्पराणां विकासः प्राचीनकालादेव मन्यते। सांस्कृतिकविकासेन सह वैदिककलापरम्परापि पुरातन्येवास्ति। आवैदिककालादेव वास्तुशास्त्रस्य अद्भुतोहरणानि प्राप्यन्ते। ततः जिज्ञासोत्पद्यते यद् वास्तुशास्त्रस्य उद्भवः विकासश्च कथं जातः। यद्यपि शिवस्य स्वेदबिन्दुतः वास्तोः उत्पत्तिः जातेति भारतीयपरम्परायां समुपलभ्यते परन्तु कदा मानवस्य कृते अस्यावश्यकता जाता,

कथमस्य शास्त्रस्य विकासो जातः? एतद् ज्ञानाय भारतीयवास्तुशास्त्रस्य संक्षिप्तविकासक्रमस्य ज्ञानमावश्यकम् ।

समराङ्गणसूत्रधारे गृहनिर्माणपरिकल्पनाविषये एका अद्भुतकथा वर्णिता दृश्यते। तस्यानुसारेण प्रारम्भिकवैदिककाले देवा मानवैः सह पृथिव्यामेव निवसन्ति स्म। ते देवा इव अजराः आरोग्ययुक्ताश्च आसन् । अर्थात् तेऽपि स्थिरयौवनं नीरोगताञ्च प्राप्य देवैः सह अस्यां धरायां निवसन्ति स्म। दैवेः सह वासं कुर्वन्तः मानवा अपि प्रायः गिरिसरोवरवनादिषु विचरन्ति स्म।[23] वनेषु स्थिताः कल्पवृक्षाः मनुष्याणां कामनापूर्तिं कुर्वन्ति स्म। बुभुक्षया, पिपासया, दुःखादिना च रहिता मानवाः दशसहस्राब्दपरिमितायुर्यताः अभवन् । तेषां शरीरमपि देवसदृशं कान्तियुक्तमासीत् ।[24]

तस्मिन् काले सूर्योऽपि तीक्ष्णतापैः सह स्वोग्ररूपेण नासीत् नहि चन्द्रः क्षीणत्वं प्राप्नोति स्म।[25]

कालान्तरेण देवैः सह निवासं कुर्वन्तः मानवाः देवान् प्रति आदरभावं विस्मृतवन्तः। ततः देवाः कल्पवृक्षं स्वर्गे स्थापितवन्तः। देवानां स्वर्गगमने सति मानवेषु विद्यमानः दिव्यभावोऽपि समाप्तो जातः।[26] अस्मात् कारणात् पूर्व सदैव वसन्तर्तुः भवति स्म, ततः शीतवर्षादिरूपेण ऋतवः अभवन् । ऋतुपरिवर्तनकारणादेव मानवेषु रोगशोकादिकं वन्यजीवेभ्यश्च भयादिकं जातम् ।[27]

इत्थमेव शीतवर्षावायुजनितत्रिविधदुःखनिवृत्तये मैथुन्यादिगुप्तकर्मणां व्यवहाराणाञ्च गोपनार्थं गृहस्यावश्यकता जाता। ततः मानवेन गुहापर्वतेषु गृहनिर्माणस्यारम्भः कृतः तथा च वृक्षादिभिः पर्णकुटीरादीनां निर्माणं कृतम् ।[28]

शनैः शनैः मानवेन स्वर्गस्य कल्पद्रुमसदृशगृहणाम् एकशाल-द्विशाल-चतुश्शलादिभवनानां निर्माणं कृतम् । तथा च शीतवर्षातापादिभ्यः त्राणार्थं गृहेषु निवासः परिकल्पितः। पौराणिकमतानुसारेण राजा पृथुः प्रप्रथमं भूमिं समतलीकृत्य सुव्यवस्थितावासपरिकल्पनां ब्रह्मणः पुरतः प्रस्तुतवान् ।[29]

ततः ब्राह्मणः चतुर्विधमुखेभ्यो निर्माणादिकार्याय विश्वकर्मा मयः त्वष्ट मनुश्चेते समुत्पन्नाः जाताः। तत्पश्चात् ब्रह्मणः आज्ञया ग्रामादिनिर्माणाय विश्वकर्मा सहायकत्वेन स्वपुत्रं स्थपतिं, मयः स्वतनयं सूत्रग्राहीं, त्वष्टा स्वसुतं वार्धिकीं तथा च मनुः स्वात्मजं तक्षकं नियुक्तवान् ।[30] अनेन प्रकारेण स्वपुत्राणां सहयोगेन विश्वकर्मादयः गृहग्रामादिकानां रचनां कृतवन्तः। पुराकाले इयं वास्तुविद्या द्विजानां पार्श्वे आसीत् परन्तु कालान्तरेण स्थपतीनां शास्त्रीयज्ञानस्य, सिद्धान्तानां प्रयोगस्य, चारित्रिकगुणानां च निरन्तरह्रासेन इयं विद्या द्विजेतरेभिरधिगृहीता।[31] तत्र पुराणादिषु वास्तुशास्त्रस्य नैकानामाचार्याणां वर्णनं प्राप्यते तथापि तेषु वास्तुशास्त्रस्याष्टादश प्रवर्तकाः महत्वपूर्णाः सन्ति। मत्स्यपुराणे

वास्तुशास्त्रस्य अष्टादशप्रवर्तकानाम् आचार्याणां नामानि वर्णितानि सन्ति[32]-

परन्तु वास्तुविद्यायाः प्रथमोपदेशकः मत्स्यावतारधारी भगवान् विष्णुरस्ति।[33] अग्निपुराणे पञ्चविंशति तन्त्रग्रन्थानां वर्णनं प्राप्यते येषामुपदेष्टारः वास्तुशास्त्रस्योपदेशका अपि सन्ति।[34] मानसारग्रन्थे वास्तुशास्त्रस्याचार्याणां परिगणनं निम्नप्रकारेण कृतमस्ति- विश्वकर्मा, विश्वेशः, विश्वेश्वरः, प्रबोधकः, वृतः, मयः, त्वष्टा, मनुः, नलः, मानवित्, मानकल्पः, मानसारः, प्रष्टा, मानबोधः, विश्वबोधः, नयः, आदिसारः, विशालः विश्वकाश्यपः, वासुबोधः, महातन्त्रः, वास्तुविद्यापतिः, पाराशरीयकः, कालयूपः, चैत्यः, चित्रकः, आवर्यः, साधकसारसंहिता, भानुः, इन्द्रः, लोकेशः, सूर्यश्चेति।[35]

उपर्युक्तानामाचार्याणामतिरिक्तं रामायणे वास्तुज्ञयोः नलनीलयोः वर्णनं प्राप्यते। आभ्यां समुद्रस्योपरि सेतोः निर्माणं कृतम्।[36] महाभारते प्रख्यातवास्तुविदः पुरोचनस्योल्लेखः प्राप्यते येन लाक्षागृहस्य रचना कृता।[37] बृहत्संहितायां स्थाने स्थाने गर्ग-पाराशर-मनु-वसिष्ठ-विश्वकर्मा-नग्नजित्-मयादीनां वास्तुविदां मतानि प्राप्यन्ते।[38] वास्तुकौतुके शौनक-राम-रावण-परशुराम-हरि-गालव-शौभित-वैद्याचार्य-मयपुत्र-कार्तिकेय-च्वयनादीनां वास्तुशास्त्रज्ञरूपे वर्णनमस्ति।[39] विश्वकर्मप्रकाशग्रन्थे वास्तुप्रवर्तकेषु गर्ग-पाराशर-बृहद्रथ-विश्वकर्मणामुल्लेखो दृश्यते। कश्यपऋषेः काश्यपशिल्पम्, अगस्त्यस्य सकलाधिकारः, मरीचेश्च वैखानसागमोपि प्रसिद्धाः ग्रन्थाः सन्ति।[40]

पुराणेषु स्थापत्यविषये शिल्पविशारदरूपेण विश्वकर्मा-मयपुरोचनादीनां नामान्यपि वर्णितानि सन्ति। पुरोचनेन निर्मितम् अस्त्रशस्त्रादीनां वर्णनमपि समुपलभ्यते। मनुष्यालयचन्द्रिकायां विश्वकर्मकुमारयोः नामानि अपि उल्लिखितानि सन्ति। गर्गपाराशरनारदवसिष्ठादिभिः लिखिताः संहिताग्रन्थाः इदानीमपि उपलभ्यन्ते।[41]

एतैः आचार्यैः वास्तुशास्त्रपरम्परायाः विस्तारः कृतः। परञ्च मत्स्यपुराणे वर्णितानां सर्वेषाम् आचार्याणां लिखिताः ग्रन्थाः सम्प्रति नोपलभ्यन्ते। एतेषु विश्वकर्म-मययोः विरचिताः वास्तुविषयकस्वतन्त्रग्रन्थाः अतिप्रसिद्धाः सन्ति।

**पुराणसंहितासु वास्तुविमर्शः**

पुराणशब्दस्यार्थः पुरातनमिति। वेदात् परं पुराणामेव गणना अभिधीयते। सम्प्रत्युपलब्धसमृद्धवैभववास्तुकलाः पुराणेषु वर्णितवास्तुविद्यायाः किञ्चिद्विकसितस्वरूपमिति कथयितुं शक्यते। प्रायः सर्वेषु पुराणेषु स्थापत्यकलायाः वर्णनं प्राप्यत एव। गृहभवनदुर्गप्रासादादिनिर्माणे उत्कृष्टवास्तुकलायाः दिग्दर्शनं पुराणेषु भवत्येव। गृहादिनिर्माणेन साकं राजप्रासाद-देवप्रासाद-शयनकक्ष-आयुधगृह-विभिन्नप्रतिमादीनाञ्च निर्माणविधिः तत्रोपलभ्यते।

तत्र मुख्यरूपेण मत्स्य-अग्नि-वराह-ब्रह्मवैवर्त-स्कन्द-देवीभागवत-गरुड-श्रीमद्भागवत-कल्कि-भविष्य-विष्णुधर्मोत्तरपुराणेषु वास्तुशास्त्रस्योल्लेखः प्राप्यते। एतेष्वपि मत्स्य-स्कन्द-अग्नि-गरुड-भविष्यपुराणेषु अस्य शास्त्रस्य सिद्धान्तानां नियमानां च प्रतिपादनं विस्तरेण दरीदृश्यते। पौराणिकमतानुसारेण राजा पृथुः सर्वप्रथमं पृथिवीं समतलीकृत्य सुव्यवस्थितस्य आवासस्य परिकल्पनां ब्रह्मणः समक्षे प्रस्तुतवान् ।[42] तदनन्तरं ब्रह्मणः चतुर्विधमुखेभ्यः निर्माणादिकार्यार्थं विश्वकर्म-मय-त्वष्टृ-मनूनामुद्भवो जातः।[43] तत्पश्चात् ब्रह्मणः आज्ञया ग्रामादिनिर्माणार्थं विश्वकर्मादयः सहायकत्वेन स्थपत्यादीनां पुत्राणां नियुक्तिं कृतवन्तः। यथोपलभ्यते ।[44]

तत्र स्थपतिः, स्थापत्याधिपतिः, वेदादिसर्वशास्त्रपारङ्गः, आचार्यलक्षणैर्युक्तः, समग्रनिर्माणकार्ये कुशल आसीत् । अस्य आज्ञया एव सूत्रग्राह्यादयः सर्वे वास्तुकार्यं कुर्वन्ति।

सूत्रग्राही तु श्रुतज्ञाः, रेखाज्ञः, शास्त्रकोविदश्चासीत् । वार्धिकिस्तु विचारज्ञः, श्रुतिज्ञः, चित्रकर्मज्ञश्चाभवत्। एवमेव तक्षकः कर्मवित्, सभ्यः, सबान्धवादयापरः, शिल्पीनां गुरुश्चासीत्।[45] एतेषां सहयोगेन गृहग्रामादिकानां रचनां विश्वकर्मादयः कृतवन्तः। तत्रैव वास्तुशास्त्रस्योद्भवः इति स्वीक्रियते। वास्तुशास्त्रस्य परम्परायां प्राप्यते यत् पुराकाले इयं विद्या उच्चवर्गस्य पार्श्वे आसीत्[46] परन्तु कालान्तरेण स्थपतीनां शास्त्रीयज्ञानस्य, सिद्धान्तानां प्रयोगस्य, चारित्रिकगुणानां चोत्तरोत्तरह्रासेन च शूद्रादिनीचवर्गैः विद्येयं सम्प्राप्ता।[47] - एवं पुराणेषु वास्तुशास्त्रविषये नैकविधचर्चा समुपलभ्यते। अत्र मत्स्य-स्कन्द-अग्नि-गरुडविष्णुधर्मोत्तर-भविष्यपुराणेषु वास्तुशास्त्रस्य यथा सम्प्राप्तानां सिद्धान्तानां नियमानां च विषये काचित् चर्चा क्रियते -

**मत्स्यपुराणम्**

मत्स्यपुराणे अष्टाध्यायेषु वास्तुशास्त्रविषयकवर्णनं प्राप्यते। अस्मिन् पुराणे कथितानां वास्तुशास्त्रप्रवर्तकानां भृगु-अत्रि-वसिष्ठाद्यष्टादशाचार्याणां नामानि तस्मिन् काले वास्तुशास्त्रस्य महत्त्वं लोकप्रियतां च प्रकटीकुर्वन्ति।[48]

मत्स्यपुराणे वास्तुपुरुषस्याविर्भावस्य कथानुसारेणान्धकासुरस्य वधसमये शिवस्य ललाटात् ये स्वेदबिन्दवः धरायां अपतन् तेभ्यः भयङ्कराकृतियुक्तः एकः पुरुषः जातः। अन्धकगणानां रुधिरपानेनापि तस्य क्षुधापूर्तिः नाभवत् । अतृप्तः स त्रिलोकीं भक्षणाय उद्यतोऽभवत् । तत्पश्चात् रुद्रादयः देवाः तं गृहीत्वा अधोवक्त्रं निक्षिप्य वास्तुदेवरूपे प्रतिष्ठापतिवन्तः। येन देवेन तस्य यदङ्गं गृहीतं, स तत्रैव स्थापितोऽभवत् । तत्पश्चात् स वास्तुपुरुषसंज्ञाया प्रसिद्धिं प्राप्तवान् ।[49] इयं कथा कस्मिंश्चित् परिवर्तितस्वरूपे अन्यपुराणेष्वपि दृश्यते। मत्स्यपुराणे मुख्यतया गृहारम्भकालानुसारेण शुभाशुभफलं,

भूमेः परीक्षणविधिः, वास्तुपदविन्यासाः, वास्तुपुरुषस्य मर्मादिस्थानानि, भवनस्य शालाप्रभेदाः गृहक्षेत्रफलनिरूपणम्- औच्यादिनिरूपणं, स्तम्भविचारः, द्वारवेधविचारः, काष्ठसङ्ग्रहविधिः, शल्योद्धारादिविषयाः कथिताः सन्ति।[50] तत्र 269 तमे अध्याये षोडशमार्गिकवास्तोः[51] लिङ्गमानानुसारेण प्रासादनिर्माणं[52] गर्भगृहानुपातेन प्रासादनिर्माणं[53], त्रैवेदक्षेत्रप्रासादवर्णनं[54] सर्वतोभद्रादिप्रासादनिर्माणं[55] च निगदितानि। एवमेव लौकिकस्थापत्ये बहुविधिभवनानां वर्णनं तत्र समुपलभ्यते।[56] मत्स्यपुराणस्य वचनानि यत्र तत्र वास्तुशास्त्रस्य मानकग्रन्थेषु चापि सम्प्राप्यन्ते।

**अग्निपुराणम्**

अग्निपुराणस्याध्यात्रये[57] वास्तुकलायाः मूर्तिकलायाश्च[58] वर्णनमस्ति। तत्र चतुषष्टिपदवास्तूनि देवस्थापनप्रसङ्गे कथितमस्ति यत् -

**चतुःषष्टिपदं कृत्वा मध्ये ब्रह्मा चतुष्पदः।**
**दक्षिणेन विवस्वांश्च मित्रः पश्चिमस्तथा।।**[59]

अग्निपुराणानुसारेण वास्तुशास्त्रप्रवर्तकाचार्याः पञ्चविंशतिः सन्ति।[60] अग्निपुराणे प्रासादनिर्माणाय भूमिचयनविषये स्पष्टं भणितमस्ति।[61]

तत्र वास्तुलक्षणाध्याये नगरस्य विभिन्नदिक्षु देवस्थापनविषये निगदितं यन्नगरस्य मध्यभागे ब्रह्मणः मन्दिरं, पूर्वे इन्द्रस्य, आग्नेयकोणे अग्निमातृकानां, दक्षिणे यमभूतादिकानां, नैर्ऋत्यकोण च पितर-चण्डिकयोः स्थापनं करणीयम्।[62] अपि च अग्निपुराणे शुभाशुभफलपूर्वकं गृहारम्भकालनिर्णयः, चतुषष्टिपदवास्तुचक्रं, भवनाद्बहिः वृक्षारोपणं, वास्तुप्रतिष्ठाविधिः, नगरस्थापना, कुण्ड-वापी-तडागादिनिर्माण-विधिश्च विस्तरेण वर्णिताः।

**गरुडपुराणम्**

गरुडपुराणे वर्णितमस्ति यद् वास्तुपुरुषस्य शिरः ईशानकोणे, पादौ नैर्ऋत्ये, दक्षिणहस्तः आग्नेयकोणे, वामहस्तश्च वायव्ये भवेत् ।[63] गरुडपुराणे चतुर्षु अध्यायेषु वास्तुविद्याविषयक चर्चा वर्तते। भवननिवेश-पुरनिवेश-दुर्गनिवेश-उद्याननिवेशादीनां सुन्दरं शास्त्रीयवर्णनं च तत्रोपलभ्यते। एवमेव एकाशीतिपदवास्तु-तचतुषष्टिपदवास्तु-प्रासाद-प्रतिमादिकानां वर्णनमपि कृतमस्ति। गरुडपुराणे देवप्रासादादिभिः सह लौकिकस्थापत्यविषयेऽपि मनोहरं वर्णनं प्राप्यते।[64]

**भविष्यपुराणम्**

गृहस्य प्रयोजनविषये भविष्यपुराणे कथितमस्ति -

**परगेहकृताः सर्वाः श्रौतस्मार्तादिकाः क्रियाः।**
**निष्फलाः स्युर्यतस्तासां भूमीशः फलमश्नुते।।**[65]

एवमेव गृहस्य महत्त्वविषये भविष्यपुराणे भणितमस्ति।[66] भविष्यपुराणेऽपि प्रायः अग्निपुराणोक्तविषयाः त्रिषु अध्यायेषु निगदिताः सन्ति।

**स्कन्दपुराणम्**

स्कन्दपुराणस्य माहेश्वरखण्डे वैष्णवखण्डे च वास्तुकलायाः वर्णनं दरीदृश्यते। तत्र नगरस्थापन-स्वर्णादिशाला-रथनिर्माण-स्थपतिगृह-विवाहमण्डप-चित्रकर्मादीनां विषये मनोहरं वर्णनं प्राप्यते।

**विष्णुधर्मोत्तरपुराणम्**

विष्णुधर्मोत्तरपुराणे भूमिपरीक्षा सामान्यप्रासादलक्षणानि च वर्णितानि।[67] एवमेव शुभाकृतिविषये प्रासादलक्षणे 101 मन्दिराणां चर्चा तत्र प्राप्यते।[68]

प्रायः सर्वेषु पुराणेषु वास्तुविद्यायाः आचार्याः, वास्तुशैली, भवन-पुरादिनिवेशः, तालमानं, प्रतिमालक्षणं, लिङ्गलक्षणं, पीठिका, सभामण्डपम्, उद्यानम्, वापीकूपतडागादिविधिः शैलमन्दिरं, चित्रकला च वर्णितं दृश्यते। अनेन प्रकारेण पुराणानाम् अध्ययनेन वास्तुशास्त्रस्य समुन्नतपरम्पराविषये ज्ञायते।

**रामायणमहाभारतमहाकाव्योः वास्तोः स्वरूपम्**

भारतवर्षे रामायण-महाभारतग्रन्थौ भारतीयसंस्कृतेः संवाहकौ स्तः। संस्कृतस्य प्रायः सर्वेषां महाकाव्यनामेतौ उपजीव्यग्रन्थौ वर्तते। भारतीयविद्वांसः पुराणामनन्तरं एतयोः कालः स्वीकुर्वन्ति। तत्र सर्वप्रथमं रामायणस्य अनन्तरञ्च महाभारतस्य रचनाकालः मन्यते। अत्र एतयोः काले वास्तुस्वरूपं किञ्चित्प्रस्तूयते -

**रामायणम्**

वाल्मीकिरामायणे विभिन्ननगराणाम् अयोध्या-जनकपुरी-किष्किन्धा-लङ्कादीनां सुन्दरं वर्णनं दरीदृश्यते। तत्र सम्प्राप्तं नगर-दुर्ग-प्राकार-प्रासाद-आपण-विमान-वाटिका-देवालय-सभाभवनादीनां वर्णनं तस्य कालस्य वास्तुकौशलमभिव्यनक्ति। न केवलं प्रासादिकेषु अपितु तृणकुटीरादिनिर्माणे अपि तत्र प्रावीण्यं दरीदृश्यते। तत्र स्थपतिसूत्रकर्मविशारदतक्षकवर्धक्यादीनां नामोल्लेखो वास्तुकर्मणि वास्तुविदां सम्मानं नैपुण्यं च प्रस्तौति।[69]

रामायणकालेऽपि वास्तुशास्त्रस्येकं विकसितं नूतनञ्च रूपं दरीदृश्यते। तत्र बहुभूमिकायुक्तभवनानां वर्णनं तस्मिन्काले भारतीयस्थापत्यकलायाः उत्कृष्टतां प्रदर्शयति। यथा -

**प्रासदैर्नैकभूमिभिः।**[70]

एवमेव च -

**सप्तभौमाष्ट भौमेश्च।**[71]

अत्र भूमिः भौमौ वा शब्दः तत्कालीनबहुतलयुतभवनानि द्योतयति। राजप्रासादादिनिर्माणे सुरक्षादृष्ट्या दुर्गादीनां निर्माणमपि भवति स्म। रामायणे चतुष्प्रकारकाणां दुर्गाणां वर्णनमुपलभ्यते। यथा -

**नादेयं पार्वतं वान्यं कृत्रिमं चतुर्विधम् ।**[72]

दुर्गादिकं परितः 'परिखा' निर्माणं अपि भवति स्म। कथितं यथा -

**परिखाश्च शतघ्न्यश्च यन्त्राणि विविधानि च।**
**शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः॥**[73]

काव्येऽस्मिन् नलनीलयोः वास्तुज्ञयोः वर्णनम् उपलभ्यते। नलः घृताचीतः उत्पन्नः विश्वकर्मणः पुत्र आसीत्।[74] नलोऽपि पितुः विश्वकर्मणः सदृशः वास्तुशास्त्रे निष्णातः आसीत्।[75] तेनैव नीलेन साकं समुद्रोपरि दशयोजनदीर्घसेतोः निर्माणं कृतमासीत्।[76] अनेन प्रकारेण रामायणे वास्तुचर्चा विस्तृततरूपेण प्राप्यते।

**महाभारतम्**

महाभारतम् इति महाकाव्यं 'जयसंहिता' इति संज्ञयापि ज्ञायते। महाभारतेऽपि वास्तुविद्यायाः नैकानि उद्धरणानि समुपलभ्यन्ते। अस्मिन् काले स्थापत्यकलायाः वास्तुविद्यायाः वा उन्नतं स्वरूपं दरीदृश्यते। महाभारतसंहितायां वर्णितमस्ति यत् पाण्डवानां राजप्रासादः एतादृशाः आसीद् यत्र स्थले जलस्य, जले च स्थलस्य प्रतीतिर्भवति स्म। अयन्तु मयदानवेन रचितः भवननिर्माणकलायाः अद्वितीयम् उदाहरणमासीत् । तत्र वर्णिता इन्द्रप्रस्थनगर्याः नगरनिर्माणयोजनापि स्थापत्यकलायाः उन्नतिं प्रदर्शयति। द्वारका-हस्तिनापुर-मिथिला-वरणशीलादिनगराणामपि तत्र उल्लेखः समुपलभ्यते। तस्मिनकाले दुर्गनिर्माणं राजधान्याः रक्षणार्थं भवति स्म। दुर्गाणां षड्विधभेदानां विषये तत्रोल्लिखितमस्ति -

**धन्वदुर्गं महीदुर्गं गिरीदुर्गं तथैव च।**
**मनुष्यदुर्गमब्दुर्गं वनदुर्गं च तानि षट् ॥**[77]

तस्मिन् काले नगरं परितः प्राकारनिर्माणमपि भवति स्म तथा च तानि प्राकाराणि जलेन परिपूर्णं क्रियन्ते स्म। सुरक्षादृष्ट्या एतानि महत्त्वपूर्णानि भवन्ति स्म। तत्र सभापर्वान्तर्गते इन्द्रसभा-यमसभा-वरुणसभा-कुबेरसभा-ब्राह्मसभादीनां च वर्णनं समुपलभ्यते।[78] अनेन प्रकारेण हस्तिनापुर-इन्द्रप्रस्थ-द्वारकापुरीप्रभृतिनगराणां वर्णनं, दुर्ग-प्राकार-आयण-रथ-शयनासन-वाटिका-विमान-देवालय-बहुतलयुक्तभवन-सभाभवनादीनां महाभारते वर्णनं तत्कालीनसमृद्धं वास्तुकौशलं प्रकटयति। तत्र सभापर्वणि[79] वर्णितस्य गिरिव्रजस्य वैभार-विप्रक-रत्न-उदय-सोमगिरीणां ध्वंसावशेषाः सम्प्रत्यपि राजगृहे प्राप्यन्ते।[80] महाभारते वास्तोः समुन्नतं स्वरूपं वर्णितमस्ति यत्तु

तस्मिन्काले भारतीयानां कलाप्रियतां वास्तुकौशलं च प्रदर्शयति।

**सन्दर्भाः**


1. ऋग्वेद, 7.54.1
2. वाचस्पत्यम्
3. निरुक्तम् , 10.02.16
4. सिद्धान्तकौमुदी भ्वादिगणः
5. सिद्धान्तकौमुद्याम् , भ्वादिगणे परस्मैपदी
6. उणादिप्रकरणम्, 75, 657
7. द्रष्टव्यम् (वास्तुशास्त्रविमर्शपुरोवाक् पंक्ति 2)
8. प्रासादीनि वस्तूनि वस्तुत्वात् वस्तु संश्रयात् ।
   वस्तून्येव हि तान्येव प्रोक्तान्यस्मिन्पुरातनैः।। मयमतम् , अ.2, श्लोक 3
9. ऋग्वेदः 1.154.6, 7.54.1-3, 7.55.1, 8.17.14, 8.25.5
10. वास्तोष्पत्य का पर्यायवाची स्थापत्य उपलब्ध है। बृहद्देवता 2.2
11. ऋग्वेदः 10.102.10
12. ऋग्वेदः 10.120.7
13. ऋग्वेदः 6.18.2
14. ऋग्वेदः 10.73.6
15. ऋग्वेदः 5.47.7, 10.106.9
16. पंचविशब्राह्मणम् 17.11.6.7
17. बृहद्वास्तुमाला, अ.1, श्लो. 4
18. विश्वकर्मावास्तुशास्त्रम् , अ.7, श्लो. 1
19. मानसारः अ. 3, श्लो. 61
20. विश्वकर्मावास्तुशास्त्रम् , अ.7, श्लो. 61
21. अर्थशास्त्र-अधिकरणम्, 03, अ. 8
22. अमरकोशः, काण्डम् 2,19
23. समराङ्गणसूत्रधारः अ. 6, श्लो. 3
24. समराङ्गणसूत्रधारः अ. 6, श्लो. 6-7
25. तत्रैव, श्लो. 9
26. तत्रैव, श्लो. 18
27. तत्रैव, श्लो. 33
28. तत्रैव, श्लो. 34-35
29. वास्तुसारसंग्रहः प्राकक्थनम् , पृ. 5, उद्धृतं वास्तुशास्त्रविमर्शः
30. तत्रैव, श्लो. -8-9
31. ब्रह्मवैवर्तपुराणम्, 1/10/19-21

32. मत्स्यपुराणम्, 251.2-4
33. मत्स्यपुराणम्, 252/4
34. अग्निपुराणम्, 35/1-5
35. मानसारः, 68/1-2
36. वाल्मिकीरामायणम्, 22/52
37. उद्धृतः वास्तुशास्त्रविमर्शः द्वितीयपुष्पम्, पृ. 9
38. तत्रैव
39. तत्रैव
40. तत्रैव
41. वास्तुशास्त्रविमर्शः, पृ. 31
42. वास्तुसारसंग्रहप्राकक्कथनम् , पृ. 5
43. तत्रैव, पृ. 8
44. तत्रैव, पृ. 9
45. तत्रैव
46. सुशीलश्चतुरो दक्षः शास्त्रज्ञो लोभवर्जितः।
    क्षमायुक्तो द्विजश्चैव सूत्रधारः स उच्यते।। - राजबल्लभमण्डनम् 1/41
47. ब्रह्मवैवर्वतपुराणम् 1/10/19-21
48. मत्स्यपुराणम् 251/2-4
49. तत्रैव अ. 252
50. द्रष्टव्यं मत्स्यपुराणे अ. 252 तः 260 पर्यन्तम्
51. मत्स्यपुराणम् 269/1-6
52. तत्रैव 7.13
53. तत्रैव 15.20
54. तत्रैव 21.26
55. तत्रैव 28-30
56. तत्रैव अ. 254
57. द्रष्टव्यं अग्निपुराणे अ. 92
58. अग्निपुराणे 13 तमे अध्याये
59. तत्रैव, 247/2-15
60. तत्रैव, 39/1-5
61. तत्रैव, 92/6-10
62. तत्रैव, 39/10-13
63. गरुडपुराणम्, 1/46
64. वास्तुशास्त्रविमर्शः तृतीयपुष्पम्, पृ. 9-10

65. भविष्यपुराणे उद्धृतं वास्तुकल्पलता 1/7
66. तत्रैव, 1/1
67. विष्णुधर्मोत्तरपुराणे अ. 93
68. तत्रैव अ. 86-88
69. वाल्मीकिरामायणम्, अयोध्याकाण्डं सर्गः, 80.01-02
70. तत्रैव किष्किन्धाकाण्डं सर्गः 33.08
71. तत्रैव सुन्दरकारण्डं सर्गः 02.52
72. तत्रैव युद्धकाण्डं सर्गः 03.20
73. तत्रैव युद्धकाण्डं सर्गः 3.15-16,23
74. तत्रैव युद्धकाण्डं सर्गः 22.45
75. वामनपुराणम् 62, मानसारः 68.1-2
76. वाल्मीकिरामायणे युद्धकाण्डे 22.52, तत्रैव 22.73
77. महाभारतशान्तिपर्वणि अ. 87 श्लो. 05
78. भारतीय वास्तुशास्त्र का इतिहास, पृ. 70-71
79. महाभारतसभापर्वणि 19/02
80. उद्धृतवास्तुशास्त्रविमर्शः प्रथमपुष्पम्, पृ. 21

UGC - CARE Listed

पाणिनीया
Vol. XXXVI, Year X
मई-जुलाई, 2023

# श्रीमद्भगवद्गीता : कर्मयोगाश्रितं विश्लेषणात्मकमेकम् अध्ययनम्

**मानसमण्डलः***

**सारः -** श्रीकृष्णद्वैपायनवेदव्यासेन श्रीमद्भवद्गीतायाः कर्मयोगनाम्नि तृतीयाध्याये कर्मणः सिद्धान्तः उपस्थापितः। करुणासिन्धुः श्रीकृष्णः अर्जुनम् अवदत् - प्रकृतेः गुणैः मानवाः कर्म कर्तुं बाध्याः भवन्ति। एकं क्षणमपि कर्म न कृत्वा न तिष्ठति। श्रीकृष्णः सर्वदा निष्कामकर्म एव समर्थयति। स कदापि कर्मत्यागार्थम् उपदेशं न ददाति। कर्म न परित्यज्य अनासक्तभावेन कर्मकरणं प्रति श्रीकृष्णः वावद्यते। अपरतः श्रीकृष्णः अर्जुनम् अवदत् - यः मनसा इन्द्रियाणि संयम्य अनासक्ततया कर्मयोगस्य अनुष्ठानं करोति, स एव विशिष्टः प्रशंसितः वा भवति।

**कूटशब्दाः -** निष्कामः, इन्द्रियसंयमी, निस्पृहः, आकाङ्क्षा, जागतिकः, आत्मतृप्तिः, मिथ्याचारी।

श्रीकृष्णः गीतायाः कर्मयोगे कुरुक्षेत्रयुद्धक्षेत्रे विद्यमानस्य योद्धुः अर्जुनस्य माध्यमेन जगत्संसारस्य मानवान् प्रति कर्मणः गूढत्त्वं प्रकाशितवान्। इह खलु जगति प्रत्येकं मानवः कर्म कर्तुं कथं बाध्यः? कर्मत्यागे सति कस्याः समस्यायाः उद्भवः स्यात्? श्रीकृष्णस्य समीपे अस्य जगतः कस्यापि प्राप्तस्य अप्राप्तस्य वा किमपि नास्ति तथापि स कथं कर्मानुष्ठाने व्यापृतः तिष्ठति? कः मानवं तस्य इच्छायाः विपरीते बलपूर्वकं पापकर्मणि नियोजयति? अपि च भगवता अस्मिन् अध्याये जगतः मिथ्याचारिणः सदाचारिणश्च मानवस्य वैशिष्ट्यं सुन्दरतया प्रस्फुट्यते।

युद्धक्षेत्रे अर्जुनः यदा विभ्रान्तः तदा अर्जुनस्य मनसि तत्त्वजिज्ञासा समुदिता -

---

* शोधार्थी, विश्वविद्यालयसंस्कृतविभागः, तिलकामांझीविश्वविद्यालयः, भागलपुरम्

किं कर्म? किं चाकर्म? कः धर्मः कश्चाधर्मः? किं कर्त्तव्यं किञ्च अकर्त्तव्यम्? चेति अर्जुनस्य द्विधाग्रस्तेन मनसा समस्यासमाधानम् असम्भवम्? एतादृशावस्थायां बन्धुत्वभावं परित्यज्य अर्जुनः श्रीकृष्णस्य शरणागतः जायते अर्थात् तस्य शिष्यत्वं गृहीतवान् ।

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥**[1]

कस्यचन शिष्यस्य यद् वैशिष्ट्यं गीतायां लिपिबद्धं भवति अर्जुनस्य मध्ये तत् प्रस्फुटितम्, गीताग्रन्थे उक्तम् -

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति॥**[2]

अर्थात् यः गुरुं प्रति श्रद्धावान्, एकनिष्ठः साधनतत्परः जितेन्द्रियः, स एव केवलम् आत्मज्ञानलाभस्य योग्यपात्रः। प्रधानतः एतद्गुणेभ्यः एवं केवलमात्रम् अर्जुनाय गीतोक्तधर्ममूलका शिक्षा प्रदीयते।

**इह जगति प्रत्येकं मानवः कर्म कर्तुं कथं बाध्यः ?**

श्रीकृष्णः अर्जुनाय गीतायाः कर्मयोगे निष्कामकर्मणः उपदेशः प्रददाति। इह जगति कोऽपि मानवः कर्म न कृत्वा क्षणकालं न तिष्ठति, यतः प्रकृते सत्त्वं, रजः तमश्चेति त्रयो गुणाः कर्म कारयितुं प्रवर्तयन्ति। मानवः स्वीयचेष्टया वासनामूलकं कर्म परित्यज्यापि श्वास-प्रश्वासस्य कर्म, रक्तप्रवाहस्य कर्म, स्वप्नप्रदर्शनवत् कर्म रोद्धुं न पारयति। एतानि मानवस्य प्रचेष्टां विना एव स्वतः शरीरेषु प्रचलति। अतः मानवः अनिच्छन्नपि कर्म करोति इति विषये गीतायाम् उक्तम् -

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥**[3]

सत्त्वं, रजः तमश्चेति गुणत्रयस्य लक्षणप्रसङ्गे निगदितम् -

लघुत्वात् प्रकाशकत्वात् च सत्त्वगुणस्य आनन्दः प्रीतिः, सन्तोषः, तृप्तिः चेति अवस्थाः प्राप्यन्ते। रजोगुणः आसक्तिम्, अहंकारम् आकङ्क्षां च सृजति तथा तमोगुणः आवरणकारित्वात् मोहः जडता, औदासीन्यं निस्पृहता चेति अवस्थाः प्राप्यन्ते।

**कर्मत्यागे का समस्या जायते ?**

श्रीकृष्णः वारं वारं कर्म कर्तुम् उपदिशति, न तु कर्म त्यक्तुम्। यतः महान् जनः यदि कर्म परित्यजति, तर्हि समाजस्य साधारणः मानवः अपि कर्म परित्यजेत्। यतः श्रेष्ठमानवान् आचरणं साधारणमानवाः अपि अनुसरन्ति। कर्मत्यागात् अपेक्षया कर्मानुष्ठानं कथम् उत्तमम्? इत्यस्य उदाहरणत्वेन कथ्यते - जनकादिः राजर्षिगणः

कर्ममार्गम् अवलम्ब्य एव सिद्धिम् अलभत, ते कदापि कर्म न परित्यजन्ति -

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः।**
**लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि॥**[4]

आसीत् जनक-नामकः कश्चनः राजा। स राजा यदि स्वयं कर्म करोति तर्हि प्रजाजनाः अवश्यं तमनुसृत्य अनुप्राणिताः भूत्वा कर्मणि आकृष्टाः भवन्ति। राजा यदि कर्म परित्यजति तर्हि ते प्रजाजनाः कर्म कर्तुं निरुत्साहिताः भूत्वा कर्म परित्यजन्ति। अतः जनकादिराजर्षिगणवत् अर्जुनं कर्मयोगिनं कर्तुम् उपदिशति। अर्जुनसमः श्रेष्ठः मानवः यदि कर्म परित्यजति तर्हि साधारणाः जनाः अपि अर्जुनस्य मार्गमनुसृत्य कर्मत्यागस्य सिद्धान्तं नयेयुः। यतः श्रेष्ठमानवमेव साधारणाः जनाः अनुसरन्ति -

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते॥**[5]

**श्रीकृष्णः कथं सर्वदा कर्मणि व्यापृतः तिष्ठति ?**

श्रीकृष्णः अर्जुनस्य समीपे राज्ञः जनकस्य दृष्टान्तमाध्यमेन कर्मणः उत्साहं वर्धितवान् । एतेनापि श्रीकृष्णः अर्जुनस्य सन्देहराशिं दूरीकर्तुं न समर्थः आसीत् । अतः श्रीकृष्णः आत्मानमेव उदाहरणस्वरूपत्वेन अर्जुनस्य समीपे स्थापयति। यतः वयं यथा स्वस्य जनं प्रति अधिकं विश्वासं कुर्मः, स्वजनस्य वक्तव्यमेव उपस्थापयामः, तथैव श्रीकृष्ण अर्जुनं निकषा व्यक्तीकृतवान् -

**न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥**[6]

श्रीकृष्णः अवदत् - इह खलु संसारे तस्य किमपि प्रयोजनं नास्ति, त्रिलोकस्य मध्ये तस्य किमपि, कर्त्तव्यमपि नास्ति। जागतिके कस्मिंश्चित् विषये मम नास्ति किमपि प्रयोजनं तथापि अहम् अनलसतया सर्वदा कर्मणि प्रवर्ते -

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥**[7]

अर्थात् वक्तुं शक्यते यत् - यदि भगवतः किमपि कर्तव्यं न तिष्ठति तर्हि स सर्वदा अनलसभावेन कर्मणि कथं लिप्तः भवति? अस्य भगवता प्रदीयते यत् - यदि स कर्म परित्यजति तर्हि साधारणाः मानवाः तमनुसृत्य कर्म परित्यजन्ति। यतः साधारणाः जनाः सर्वदा श्रेष्ठमानवस्य आदर्शं नीतिं च अनुसरन्ति। तेन समाजे कर्महीनतायाः आदर्शे निर्मिते समाजे विशृङ्खला सृजेत् । कर्मत्यागे सामाजिकव्यवस्था न सुप्रतिष्ठा भवेत् । समाजस्य मानवानाम् आध्यात्मिकचेतना क्रमतः लोपं प्राप्नोति तथा मानवाः धर्मविच्युताः स्युः। तेन क्रमशः ध्वंसमार्गः सुगमः स्यात् ।

**कः मानवं पापकर्मणि नियोजयति ?**

अर्जुनः श्रीकृष्णस्य समीपे अपृच्छत् - मानवः अनिच्छासत्त्वे अपि केन बलपूर्वकं नियोजितः सन् पापाचरणं करोति ?

**अथ केन प्रयुक्तोऽयं पापं चरित पुरुषः।**

**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥**[8]

अर्जुनस्य प्रश्नस्य उत्तररूपेण श्रीकृष्णः अवदत् - रजोगुणात् उत्पन्नः कामः क्रोधश्च एव मानवान् पापाचरणे प्रवर्तयतः -

**काम एष क्रोध एष रजोगुणसमुद्भवः।**

**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥**[9]

कोऽपि मानवः कर्म विना क्षणकालं न तिष्ठति प्रकृतेः गुणवशात् मानवः कर्म करोति। सत्वं, रजः, तमः चेति प्रकृतेः एतन्निविधगुणानुसारं मानवानाम् आचार-आचरणविधिः निर्धार्ययते। तथैव स कर्मणि लिप्तः भवति। रजोगुणात् उत्पन्नः कामः क्रोधश्च कथं मानवान् पापकर्मणि नियोजयतः इति अधुना विचार्यम्। अस्य कामस्य उत्पत्तिः अस्माकं शरीरे कथं भवति ? अस्य उत्तरमाह -

**ध्यायतो विषयान् पुंसः सङ्गस्तेषुपजायते।**

**सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते॥**[10]

पुनः पुनः विषयस्य चिन्तनेन मानवानाम् आसक्तिः जायते, आसक्तितः कामना उत्पद्यते। कामनायाः बाधे सा क्रोधे परिणता जाता। अतः इन्द्रियस्य आकर्षणमेव कामस्य उत्पत्तेः कारणं भवति। इदम् आकर्षणं यतः भीषणं भवति कामनापि ततः तीव्रात् तीव्रतरा भवति। कामनायाः बाधे यः क्रोधः उत्पद्यते, तदेव मानवानां स्वधर्मं विनश्यति पापाचरणे च प्रवर्तयति।

न केवलं कामः क्रोधः लोभः चेति रिपुत्रयमेव नरकस्य द्वारस्वरूपमिति गीतायाः षोडशाध्याये वर्णितम् -

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**

**कामः क्रोधस्तथा लोभस्तस्मादेतत्रयं त्यजेत् ॥**[11]

अतः कामः क्रोधश्चेति कीदृशः भयङ्करः इति ज्ञातुं शक्यते। कामक्रोधलोभवशात् जगति नानाविधा कुक्रिया, असामाजिकं कर्म च उत्पद्यते इति नास्ति कापि सीमा, कामस्य वशवर्ती भूत्वा मानवानां हिताहितज्ञानं लुप्यते। तेन मानवः कुकर्मतः अत्यधिककुकर्म करोति। पुनः क्रोधवशादपि मानवः विविधानि कर्माणि करोति। अतः कामक्रोधविषये प्रत्येकं मानवेन सचेतना अवलम्बनीया। अस्य विषये सचेतने सति अस्माभिः विविधसमस्यातः स्वकीयः तथा स्वपरिवारः, समाजः च रक्ष्यते।

**विशिष्टमानवस्य वैशिष्ट्यम्**

श्रीकृष्णः अर्जुनम् अवदत् - यः मनसा इन्द्रयाणि संयम्य अनासक्तभावेन कर्मयोगानुष्ठानं करोति, स विशिष्टः प्रशंसितः वा भवति -

**काम एष क्रोध एष रजोगुणसमुद्भवः।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ।।**[12]

विवेकबुद्धिना मनसा सह इन्द्रयाणि संयम्य कर्मफले यः स्पृहां व्यतिरिच्य कर्मयोगस्य अनुष्ठानं करोति, स प्रशंसालाभस्य अधिकारी कर्मफले निस्पृहः भूत्वा कर्मयोगस्य अनुष्ठानं करोति। इन्द्रियाणां संयमः अत्यावश्यकः। इन्द्रियाणां संयते सति मनसः संयमः आवश्यकः। मनसः संयमाभावे इन्द्रियाणां संयमः असम्भवः। इन्द्रियसंयमाभावे कर्मफले निस्पृहभावः न जायते। श्रीकृष्णः कर्म समर्थयति । कर्मत्यागं स कदापि न समर्थयति। अतः इन्द्रियाणां संयमः पूर्वकं कर्मकरणं श्रेयः। इन्द्रियसंयमः अनासक्तिपूर्वकं च कर्मकरणमेव कर्मयोगस्य मूलः विषयः।

**उपसंहारः**

गीतायाः कर्मयोगे श्रीकृष्णः कदापि कर्मत्यागं न समर्थयति। जनकनृपवत् अधमः ज्ञानी राजर्षिः आत्मज्ञानं लब्ध्वापि कर्मणः विच्युतः अभवत् । अपि तु कर्ममार्गेण एव सिद्धिम् अवाप्नोति स्म, अपि च आत्मज्ञानी मुक्तः पुरुषगणः जगद्धिताय कर्म करोति। श्रीकृष्णः पुनः अवदत् - प्रकृतेः त्रयो गुणाः मानवान् कर्मणि प्रवर्तयन्ति। यः कर्मन्द्रियाणि संयम्य मनसि इन्द्रग्राह्यविषयान् प्रति आकृष्टः भवति स इह खलु जगति मिथ्याचारी मानवः। पुनः यः मनः संयम्य इन्द्रियाणि संयमते तथा संयतेन्द्रियैः कर्म करोति स एव श्रेष्ठः।

श्रेष्ठः मानवः यद् आचरति, साधारणाः जनाः तमेव अनुसरन्ति। यः श्रद्धावान्, द्वेषवुद्धिवर्जितः सन् श्रीकृष्णस्य मतानुसारं सर्वदा कर्म करोति, स एव बन्धनाद् मुक्तः भवति। स्वधर्मः दोषदुष्टः अपि परधर्माद् अपेक्षया श्रेष्ठः। स्वधर्मे मृत्युः अपि श्रेयः। तथापि परधर्मस्य अनुसरणं विपज्जनकम् -

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।।**[13]

**सन्दर्भाः**

1. श्रीमद्भगवद्गीता- 2/7
2. तथैव- 4/39
3. तथैव- 3/5
4. तथैव- 3/20
5. तथैव- 3/21

6. तथैव- 3/22
7. तथैव- 3/23
8. तथैव- 3/36
9. तथैव- 3/37
10. तथैव- 2/62
11. तथैव- 16/21
12. तथैव- 3/37
13. तथैव- 3/35
14. तथैव- 3/35

**सहायकग्रन्थसूची**

1. श्रीमद्भगवद्गीता, अतुलचन्द्रसेनः, हरफ प्रकाशनी, कोलकाता, 1936
2. श्रीमद्भगवद्गीता, जगदीशचन्द्रघोषः, प्रेसिडेन्सी लाइब्रेरी, कोलकाता कालेज् स्क्वायार्, बङ्गाब्दः, 1384
3. चाणक्य संग्रह, चैताली दत्त, नवपत्र प्रकाशक, कोलकाता, जानुयारी, 2000
4. छात्रजीवने भगवद्गीता (बङ्गभाषायाम्), स्वामी आत्मश्रद्धानन्दः, उद्बोधन कार्यालय, कोलकाता, जून 2013
5. भगवद्गीता, डॉ. समरेन्द्र भट्टाचार्य, बुक् सिन्डिकाट् प्राइवेट् लिमिटेड्, कोलकाता, अप्रैल् 2006
6. नामचिन्तामणि, श्रीवैद्यनाथ भौमिक, आश्रमपाड़ा, नदीया, 1992
7. वेदान्तसारः, विपदभञ्जनपालः, संस्कृत पुस्तक भण्डार, 38 विधान सरणि, कोलकाता-6, प्रथम संस्करण, 1982
8. श्रीमद्भागवत्पुराण, गीताप्रेस् ,गोरक्षपुर, 273005
9. भगवद्गीता ओ विश्वजनीन वार्ता (बङ्गभाषायाम्) स्वामी रङ्गनाथानन्दः, उद्बोधन कार्यालय कोलकाता, प्रथक प्रकाश, बङ्गाब्दः1412
10. श्रीमद्भागवद्गीता, जयदयाल गोयेन्दका, गीताप्रेस, गोरखपुर-273005